# श्रीविद्यामालामन्त्रोद्धारः

( श्रीललितारहस्यपरिशिष्टान्तर्गतः )

श्रीभास्कररायकृतया गुरुकलाप्रकाशिकाख्यया

व्याख्यया संवलितः

( तदनुसारिमालामहामन्त्रपारायणविधिश्च )

ઉમાશંકરપીઠાધીશ્વર શ્રી સ્વામી રાઘવાનંદ
સરસ્વતીજી મહારાજ (વૃન્દાવન)


संपादकः :

वाधूल वे. रामचन्द्रशर्मा



प्रकाशक :

इक्कुव - वेंकटराघवशास्त्री

॥ श्रीः ॥

मुद्रा

श्रीमत्परमहंस परिव्राजकाचार्यवर्य
श्रीमच्छंकर भगवत्पादप्रतिष्ठित
श्रीकाञ्चीकामकोटि पीठाधिप जगद्गुरु
श्रीमच्चन्द्रशेखरेन्द्र सरस्वती श्रीपादादेशानुसारेण
श्रीमज्जयेन्द्र सरस्वती श्रीपादैः क्रियते नारायण स्मृतिः

श्रीमतां श्रीविद्योपासकानामन्येषांचास्तिकमहाशयानां विदितचरमेव श्रीविद्योपासनाप्रधानाङ्गभूतं ललितासहस्रनामस्तोत्र त्रिशतीनामस्तोत्रं, देवीखड्गमालास्तोत्रं चेतित्रयमिति । तत्र ललितात्रिशतीनाम्नां वर्णस्वरूपेयत्ता निर्णयः श्रीमदाद्यशङ्करभगवत्पादाचार्यकृतत्रिशतीभाष्येणकृतएव । ललितासहस्रनाम्नांतु, तादृशनिर्णयः श्रीमद्भास्कररायकृत सौभाग्यभास्करभाष्येणकृतोऽस्ति ॥ अतः त्रिशतीनामसु सहस्रनामसुवा शब्दापभ्रंशादि शंकावकाशो नास्त्येव । खड्गमालानामावळीविषयेतु बहुभिः बहुधामुद्राप्य अपपाठाः प्रचारितास्संति । तत्कारणं शिवप्रोक्त श्रीललिता रहस्य परिशिष्टतन्त्रान्तर्गत श्रीविद्यामालामंत्रोद्धार

पटलद्वयस्य तद्व्याख्यायाः श्रीमद्भास्कररायकृतायाः गुरुकलाप्रकाशिकायाश्चानभिज्ञतैव । तन्निरासायमुद्रापितोयंग्रंथः बहुधासमुपकरिष्यति ।

एतदुद्धारग्रन्थेन निरूपितस्य श्रीविद्यापञ्चदशाक्षरीमालामंत्रस्य शक्ति-शिव मिथुनभेदैः प्राधान्येनत्रैविद्ध्यं । पुनः तत्रैकैकस्य शुद्ध नमोन्त स्वाहान्त तर्पणान्त जपान्त भेदैः पञ्चविधत्वं चेति पञ्चदशविधास्संपद्यते । समष्ट्या सुवर्णरत्नपुष्पाञ्जलिमालाचैकेति षोडशमालाः अत्रग्रन्धे उद्धृतास्सन्ति । तेषां-स्वरूपमत्रव्याख्ययां सोपपत्तिकं सविचारं च निरूपितमस्तीति अयंग्रन्थः उपासकलोकस्यात्यंतमुपयोगीति नात्रबहुवक्तव्यमस्ति ।

एतद्ग्रन्थानुबद्ध पञ्चदशमालामंत्र प्रयोगप्रयोजनैः संतस्सर्वार्थसिद्धिसमृद्धिं प्राप्नुवंत्विति,

एतद्ग्रन्थपरिशोधकस्य जंध्याल श्रीवेङ्कटसुब्रह्मण्यशास्त्रिणः (गुंटूरु), एतत्प्रकाशकस्य इङ्गुव वेंकटराघवशास्त्रिणः, कुटुम्बस्यच, श्रीपरदेवतानुग्रहः सर्वदाभूयादितिचाशास्महे ॥

श्रीकाञ्चीक्षेत्रम्
साधारणाषाढबहुलाष्टमी ॥
1970

इति नारायणस्मृतिः



श्रीविद्यापरिपूर्णमेरुशिखरे बिन्दौ त्रिकोणान्विते
वाणीश्रीगिरिजापतीशचरणे मञ्चे शिवकारके ।
कामाक्षीं करुणारसार्णवमयीं कामेश्वराङ्कस्थितां
कांचीचिन्मयकामकोटिनिलयां श्रीब्रह्मविद्यां भजे ॥

# ग्रन्थ विषय सूचिका

## प्रयोग ग्रन्थः

# शुद्धाशुद्धपत्राणि

| पृष्ठ. | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ७,८ | मृतेर्वशेवदाः पुनस्त्रयः | मृतेर्वशाः न तस्त्रियः |
| ५ | ६ | चक्रनवक | चक्रनामनवक —? |
| " | ११ | नचक्रे | नवमचक्रे |
| ७ | १३ | नमस्वाहा | नमस्स्वाहा |
| १४ | ९ | 'श्लोक च | श्लोकं च |
| २२ | ८ | भोक्ता | भक्तो |
| " | १७ | शुध्यति | सिध्यति |
| २४ | २ | याभोगदायिनी देवी | भोगप्रदा देवता या |
| २४ | ५ | मन्त्रस्ततो | मन्त्रांस्ततो |
| २८ | ९ | सिद्धदिव्य' | दिव्यसिद्ध' |
| ३० | ८ | न यस्य लेखनं | यस्योल्लेखनं |
| ३० | ९ | पुरोडे | पुरोडाशे |
| ३२ | ९ | इत्यपि च । सं. | च संबुद्धचौ ॥ सं. |
| ३४ | ८ | 'त्याद्या | 'त्याद्य |
| ३४ | ९ | 'माकार | 'मकार |
| ३५ | ७,८ | ताच्छील्येऽपिणिन्यन्ता | ताच्छील्यणिन्यन्त |
| ३५ | १० | 'प्रमाण्योः | 'प्रियाद्योः |
| ४० | ९ | राजशब्दात् | राट्शब्दात् |
| ४१ | ८,९ | शून्ये विपुवचक्राणि | शून्यविषुवन्ति चक्राणि |

| पृष्ठसं. | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४३ | ३ | व्याप्ततायां | न्याप्ततया |
| ४५ | ७ | पापोत्तरण | पापभञ्जन |
| ४५ | १७ | द्वितीयान्त: | संबुद्ध्यन्ता: |
| ४६ | ११ | दशसमान | दशकसमान। |
| ४८ | ४ | अत्रदेव्य:त् अतिरहस्य | ॰देव्यायति रहस्य |
| ४८ | ५ | तेष्वेकारा | तेष्विकारा |
| ४८ | १५ | विग्रहेवु | विग्रहेण |
| ४९ | १६ | अङ्कुशे न | अङ्कुशिन् |
| ५० | १२ | मूनीकरण | दूनीकरणं |
| ५० | २० | मालायाप्य | मालायामप्य |
| ५१ | ७ | द्वादंश | द्वादशो |
| ५२ | ७ | अनुवादा:, | अनुपद॰ |
| " | १० | ॰माला | ॰मालाया: |
| " | १६ | ॰स्यैव | ॰स्येव |
| " | १७ | इन्नन्तानां | इदंतानां |
| ५३ | २ | समोमस्य | समोऽनुस्वारस्य |
| " | १४ | प्रयुक्त | प्रयुक्तं |
| " | १६ | सिद्धप्रयुक्ते | सिद्धिप्रयुक्ते |
| ५४ | ७ | अत्र प्रकृतित: | अत्र तर्पणजयान्तयो: शिव-मालयो: प्रकृतित: |

| पृष्ठसं. | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५४ | | वृद्धिरुभयत्र | वृद्धिः संध्यक्षरद्वयलोपश्चोभयत्र' |
| ५४ | १० | मेकत्रोनीयते | मेकत्र संकल्यते |
| ,, | १० | तदक्षरेणसह | तदक्षरमप्रसज्य |
| ,, | ११ | दशाक्षराण्यपि | दशाक्षराण्येव, |
| ,, | १९ | (१९७७) | (१९९७) |
| ५५ | ६ | वैगुण्यतायाः | द्वैगुण्यतायाः |
| ५६ | ७ | साहस्र | साहस्री |
| ५९ | ५ | पिण्डाक्षराणि | षण्डाक्षराणि ऋॢलॣ इति |
| ,, | ८ | नवत्वात् | सत्त्वात् |
| ,, | ११ | तरशतं | 'तरत्वं |
| ६० | ६ | विंशत्यधिकशता | विंशत्यधिकषोडशशता |
| ,, | ७ | एकाक्षरस्य | तावदक्षरा' |
| ,, | ८ | तस्मादष्टोत्तरत्वं | तस्मादष्टाविंशत्युत्तरशतत्त्वं |
| ,, | ९ | अवैषम्यात् | नैः शेष्यात् |
| ,, | १० | तथा च त्रिसप्तत्यधिक० (२४८५७) एको | सप्तपञ्चाशदधिकद्विशतोत्तरचतुस्सहस्रात्मक (४२५७) एकैको |
| ,, | १८ | पपत्तौ | पपत्तौ सात्यां |
| ,, | १९ | अष्टन्यूनत्वात् | सप्ताष्टादिन्यूनतापत्त्या |
| ६१ | १२ | प्यवशेषात् | प्यविशेषात् |

| पृष्ठसं. | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| " | १७ | तत्तत् | तत्र |
| ६२ | ११ | तेनेद्वुद्वु | तेनेद |
| ७० | ९ | भोक्ता | भक्तो |
| ७० | १३ | देवताय | देवतायै |
| ७३ | ३ | शिवादूति | शिवदूति |
| " | ४ | मित्रीशमयि | मित्रेश |
| " | ६ | धर्माचार | धर्माचार्य |
| " | ६ | मुक्तकेशीश्वर | केशेश्वर |
| " | १७,१८ | :षण्यमृत | वीजाकर्षण्यात्माकर्षण्यमृत |
| ७३ | १९ | महेश्वरि महामहाशक्ते | श्वरि महामहाराज्ञिमहामहा |
| ७४ | ३ | कामेश्वारी | कामेश्वर् |
| ७६ | ३ | कामेश्वर | कामेश्वरी |
| ७७ | | शिवादूत्यै, मित्रीश | शिवदूत्यै, मित्रेश |
| ७८ | | धर्माचार | धर्माचार्य |
| ७९ | १४,१५ | पा....मि (२४३९) | पा....मि गुप्ततरयोगिन्यै नमः पा....मि (२४३९) |
| ८० | ३ | सर्वप्रियंकय | सर्वप्रियंकर्यै |
| ८१ | ९ | महामहाशक्त्य | महामहाशक्त्यै |
| ८३ | ८ | राङ्कनिञय | रशिवाङ्क |
| ८४ | | शिवादूत्यै - मित्रीश - धर्माचार, केशी | शिवदूत्यै-मित्रेश धर्माचार्य केशे |

| पृष्ठसं. | पङ्क्ति | अशुद्ध | शुद्धम् |
|---|---|---|---|
| ८५ | १५,१५ | त्माकर्षिण्यै स्वाहा | त्माकर्षिण्यै स्वाहामृताकर्षिण्यै स्वाहाश |
| ८६ | ११ | सर्वज्ञायै स्वाहा····सर्व-व्याधिविना शिन्यै स्वा- | स्वाहा सर्वशक्त्यै स्वाहा सर्वै श्वर्यप्रदायै स्वाहा सर्वज्ञानमय्यै स्वाहा सर्व· |
| ९० | | शिवादूतीं मित्रीशमयीं धर्माचार· केशीश्वर | शिवदूतीं त्रेश· धमाचार्य केशे· |
| ९१ | ११,१२ | वीजाकर्षणीं त· अमृता· | वीजाकर्षणीं त· आत्माकर्षणीं त· म्यमृता· |
| | १४,१५ | तर्पयाम्य···· नङ्गरेखां | तर्पयाम्यनङ्गमदनातुरां त· म्यनङ्गरेखां |
| ९२ | ५ | दुख | दुःख· |
| ,, | १२ | रक्षा स्वरूपिणीं त···· सर्वरक्षाकर· | रक्षास्वरूपिणीं त· सर्वोसितप्रदां त· सर्व रक्षाकर· |
| ,, | १६ | रहस्व | रहस्य |
| ९३ | ४ | त्रिपुरमालिनीं | त्रिपुरवासिनीं |
| ९६ | | शिवादूती - मित्रीश - धर्माचार· केशीश्वर | शिवदूती मित्रेश धर्माचार्य, केशेश्वर· |
| १०२ | २,३ | मित्रींश धर्माचार | मित्रेश· धर्माचार्य· केशेश्वर |
| १०३ | २,३ | प्रभाकर देवमय···· मनोज· | प्रभाकर देवमय तेजोदेवमय मनोज· |

| पृष्ठं. | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | १३ | नामाकर्षणात्मा-कर्षण | नामस्कर्षण बीजाकर्षणात्मा॰ |
| ,, | ,, | अमृताकर्षण सर्वशा | अमृताकर्षण शरीराकर्षण सर्वा॰ |
| ,, | १५ | मदनातुरानङ्गवेगिन् | मदनातुरानङ्गरेखानङ्गवेगिन् |
| १०४ | ८ | सर्वशक्त | सर्वशक्ते |
| ,, | १३ | पाशिनङ्कु॰ | पाशिनङ्कुशिन् |
| ,, | ,, | Note 2 ॰राम्भा॰ | ॰राम्ब |
| | | | Note 3 अनावश्यकम् |
| १०८ | ९ | -मित्रीशर | रमित्रेश |
| | १२,१३ | धर्माचार केशीश्वर | धर्माचार्य केशेश्वर |
| ११५ | १५ | सिद्धये २ ···· | सिद्धये २ |
| ११७ | ९ | चकस्वा॰ | चक्रस्वा |
| ११८ | २ | महामहाराज | महामहाराजाय |
| १२१ | १९ | कामाकर्षण | कामाकर्षणे |
| १२४ | ८ | दिग्विमोकः ···· | दिग्विमोकः स्नानम् |
| १२६ | १९ | धर्माचार | धर्माचार्य |
| १३७ | १७ | ॰तार्पणमस्तु | ॰तार्पणमस्तु |



इङ्गुव - पिच्चमाम्बिका

( इङ्गुव - श्रीकृष्णार्यधर्मपत्नी )

यस्यास्स्मारकमिदं ग्रन्थमुद्रणम्

## श्रीचक्रम्



विन्दुत्रिकोणवसुकोणदशारयुग्म-
मन्वश्रनागदळसंयुतषोडशारम् ।
वृत्तत्रयं च धरणीसदनत्रयं च
श्रीचक्रमेतदुदितं परदेवतायाः ॥

शिवाभ्यां नमः

श्रीललितारहस्यपरिशिष्टतन्त्रान्तर्गतः

# श्रीविद्यामालामन्त्रोद्धारः

श्रीभारत्युपनामकश्रीभास्कररायाग्निचि-
त्कृतया गुरुकलाप्रकाशाख्यया
व्याख्यया संवलितः

—: * :—

[1]सुरेन्द्ररुद्रपद्मजाच्युतादयोऽपि ये मृतेर्वशाः
वशंवदाः पुनस्त्रयः सुवासिनीपदस्पृशः ।
महेश्वरस्य मृत्युघस्मरस्य साक्षिणी तु या
सुमङ्गलीरियं वधूरिमां समेत पश्यत ॥ १ ॥

श्रीरामदेवदेशिक-
चरणाब्जे मनसि रहसि निदधानः ।
भारत्युपाख्यो भास्कर-
रायो गम्भीररायसूरिसुतः ॥ २ ॥

---

1. ऋभुक्ष. T. एतद्ग्रन्थकारेणायं श्लोकः स्वीये सौभास्करनाम्नि भाष्येऽपि 'महाप्रलयसाक्षिणी' इत्यत्रोदाहृतः ।

विद्यापञ्चदशार्णो-
द्भवमालामन्त्रपञ्चदशकस्य ।
उद्धारं व्याकुरुते
ललितापरिशिष्टतन्त्रमध्यगतम् ॥ ३ ॥

तिथिसंख्यसुवर्णरत्नमालो-
ज्ज्वलगर्भां शिवनिर्मितामनर्घ्याम् ।
ललितापरिशिष्टरत्नपेटी-
मलमुत्कीलयितुं गुरोः कलेयम् ॥ ४ ॥

—: × :—

श्रीदेव्युवाच—

भगवन् देवदेवेश सर्वज्ञ करुणानिधे ।
मालामन्त्रान् समाचक्ष्व कादिविद्यासमुद्भवान् ॥ १ ॥

[1]अथादौ देवीप्रश्नः शिवं प्रति—देव्युवाचेति । यद्यपि, "स्त्रीदैवत्याः स्मृता विद्या मन्त्राः पुंदेवताः स्मृताः" इति परिभाषया त्रिपुरसुन्दरीदैवत्यानां विद्यात्वमेव वक्तुमुचितम्;

1. तत्रादौ T.

तथापि मन्त्रशब्दस्य मनुविशेष इव मनुसामान्येऽपि शक्तेः, चतुःशताधिकार्णमनूनां मालामन्त्र इत्येव संज्ञायाः सत्त्वाच्च तथोक्तिः । प्रस्तारसहस्राक्षर्युपस्थानसहस्राक्षर्यादिव्यावर्तनाय कादीति । कामराजविद्याक्षरैः पञ्चदशभिरुत्पन्नान् पञ्चदश-संख्याकान् वदेत्यर्थः ॥ १ ॥

श्रीशिव उवाच—

मालामन्त्रान् प्रवक्ष्यामि महाराज्ञि महोदयान् ।
येषां स्मरणमात्रेण करस्थाः सर्वसिद्धयः ॥ २ ॥

उत्तरमाह—श्रीशिव उवाचेत्यादि । महाराज्ञी=ललिता, तस्याः संबुद्धिः । महान् उदयो ज्ञानसूर्यस्य यैस्तान् । सिद्धयः ; ऐहिकामुष्मिकफलानि । भोगमोक्षप्रदा इति तु फलितार्थः ॥ २ ॥

एकाशीतियुतैरेकशतनामभिरङ्कितः ।
मालामन्त्रो नमःशब्दपुटस्त्रिपुरसुन्दरि ॥ ३ ॥
ततः षडङ्गदेव्यः षण्णित्याः षोडश देशिकाः ।
मुनिवेदनागसंख्या दशाष्टौ सिद्धिमातरः ॥ ४ ॥

एकाशीति । नामभिः = विशेषणविशेष्यसाधारणैः प्रातिपदिकैः । पुटः=नामसमूहस्य आदावन्ते च, 'नमः' इति शब्द-द्वयम् । तानि नामानि गणयितुमारभते—त्रिपुरसुन्दरीत्यादि ।

षडङ्गानि ; हृदयाद्यस्त्रान्तानि । तदभिमानिन्यो देवताः षट्, नित्याः = कामेश्वर्यादिचित्रान्ताः पञ्चदश, महानित्या चैकेति षोडश । देशिकाः = गुरवः, दिव्यौघसिद्धौघमानवौघभेदेन क्रमात् सप्त चतुरष्टसंख्या इत्येकोनविंशतिः । अणिमादिसिद्धयो दश, ब्राह्म्याद्या मातरोऽष्टौ, संहृत्य त्रिपुरसुन्दर्या सह षष्टिर्नामानि[1] ॥ ३, ४ ॥

मुद्राकर्षिण्यनङ्गाख्या दश षोडश कुञ्जराः ।
क्रमादिन्द्रा दश दिशः सर्वशब्दादिदेवताः ॥ ५ ॥

मुद्रेति । सर्वसंक्षोभिण्याद्या मुद्रादेव्यो दश । कामाकर्षिण्याद्याः आकर्षिणीपदघटिताः षोडश । अनङ्गपदघटिता अनङ्गकुसुमादयो कुञ्जरसंख्याकाः अष्टौ इत्यर्थः । क्रमादिति । "देहलीदीपन्यायेन" उभयत्रान्वेति । इन्द्राः = चतुर्दश, सर्वसंक्षोभिण्याद्याः । सर्वसिद्धिप्रदाद्या दश । सर्वज्ञाद्या अपि दिशः, दशसंख्याकाः । एते त्रयो गणाः सर्वशब्दघटिताः । मुद्रादिगणैः सह षडपि देवता गणाः भिन्नभिन्नचक्रस्थाः । तत्त-

1. षष्टिर्नामानीति—त्रिपुरसुन्दर्येका, षडङ्गानि, नित्याः षोडश, गुरुमण्डले एकोनविंशतिः, ब्राह्म्याद्या अष्टौ, सिद्धयो दश, सर्वे मिलिताः षष्टिः संपद्यन्ते ।

चक्रान्ते द्वे द्वे नामनीति उत्तरत्र वक्ष्यते। तेन अशीतिः;[1] संहृत्य चत्वारिंशदुत्तरशतनामानि ॥ ५ ॥

वाग्देवता हेतियुक्ता महत्योऽष्टाष्टदेवताः।
महाभट्टारिके पश्चान्महाभट्टारिकैकला ॥ ६ ॥

वाग्देवतेति। वशिन्याद्याः वाग्देव्यः अष्टौ इति सप्तमं चक्रम्। हेतिभिः = आयुधदेवताभिः, युक्ताः, मिलिताः। महत्यः = महाशब्दवत्यः, अष्टौ "समं स्यात्" इति न्यायेन चतस्रश्चतस्रो विभज्य गणनात् द्वितीयचतुष्कमेव अष्टमं चक्रम्। महाभट्टारिके इति देव्याः संबुद्धिः। महाभट्टारिकेति द्वितीयवारोक्तमेव मन्त्रषटकम्। एकला = एकैव नवमं चक्रम्। चक्रत्रयान्ते द्वे द्वे नामनीति मिलित्वा त्रयोविंशतिः[2]। संहृत्य त्रिषष्ट्युत्तरशतम् ॥ ६ ॥

चक्राणां योगिनीनां च तत्तदन्ते नवाभिधाः।
अथ चक्रेश्वरीणामप्याख्या नव ततो नव ॥ ७ ॥

---

1. अशीतिरिति—मुद्राशक्तयो दश, आकर्षिण्यः षोडश, अनङ्गा अष्टौ, सर्वशाद्याः चतुस्त्रिंशत्, षट्चक्रेषु द्वे द्वे नामनीति द्वादश, संभूयाशीतिः। उभयत्र मेलने चत्वारिंशदुत्तरशतानि संपद्यन्ते।
2. त्रयोविंशतिरिति—वाग्देवता अष्टौ, आयुधदेवता महाद्याश्चाष्टौ, महाभट्टारिका एका, चक्रत्रये द्वे द्वे नामनीति षट्, मिलित्वा त्रयोविंशतिः।

महामहेति नामानि नमस्ते त्रिः शुचिप्रिया ।
एष ब्रह्महरीन्द्रादिदेवानामपि दुर्लभः ॥ ८ ॥

संप्रदायक्रमप्राप्त एव सर्वफलप्रदः ।
मालामन्त्रो महादेवि ताराद्यस्तारकैस्त्रिभिः ॥ ९ ॥

चक्राणामिति । तत्पदन्ते; उक्तेषु चक्रेषु नवचक्रदेवतागणेषु एकैकगणान्ते त्रैलोक्यमोहनादिचक्रनवकस्यैकैकपदघटितमेकैकं नाम । तदुत्तरं, प्रकटादियोगिनीनामनवकस्थमेकैकमिति द्वे द्वे नामनी योज्ये । संख्या तु मिलितैव । अथेति । अथेत्यस्य महाभट्टारिकोत्तरपठितचक्रयोगिनीनामद्वयान्त इत्यर्थः । त्रिपुरादीनि चक्रेश्वरीणां नव नामानि । ततः पराण्यपि नवैव नामानि महामहशब्दघटितानि नवचक्रेश्वर्या विशेषणानि । तानि पराण्यपि संहृत्य एकाशीत्युत्तरशतनामानि दर्शितानि । अस्य समूहस्य आदावन्ते च नमःशब्दो देय इत्युक्तम् । ततः चरमनमःशब्दोत्तरं 'ते', 'त्रिः' इत्यक्षरद्वयं स्वरूपम् । शुचिप्रिया = वह्निजाया, स्वाहाशब्दश्चेत्यर्थः । ताराद्यः प्राथमिकनमःशब्दात् पूर्वं तारः ओंकारो देयः । एषः [1]तारादिः स्वाहान्तः संदर्भः तारत्रयपुटितः कार्यः ॥ ७-९ ॥

1. प्रणवादि T.

तदेवाह—

रमया मायया वाचा पुटितः पुटितः पुनः ।
इत्थं पदानि मालायां त्रिनवत्यधिकं शतम् ॥ १० ॥

रमयेति । प्रथमं रमाबीजपुटितः । आदावन्ते च रमाबीजसहितः[1] । तद्विशिष्टः संदर्भः पुनः मायाबीजेन ह्रींकारेण संपुटितः । तदुभयपुटितः संदर्भः पुनः आद्यन्तयोः वाचा ऐंकारेण सहितः कार्यः । वाङ्मायाकमलानां त्रितारीसंज्ञा कल्पसूत्रे प्रसिद्धा । नमःपदद्वयं ते, त्रिः, स्वाहा, इति पदत्रयम्, सप्त बीजान्यपि च पदान्येवेत्यभिप्रायेण त्रिनवत्यधिकमित्युक्तम् । एकाशीत्यधिकशतप्रातिपदिकमात्रोद्धारेऽपि वक्ष्यमाणविभक्त्यभिप्रायेण पदानीत्युक्तम् ॥ १० ॥

मालामन्त्रस्त्रिधा देवि स्त्रीपुंमिथुनभेदतः ।
ताः पञ्चधा शुद्धनमस्स्वाहातृप्तिजयान्तिमाः ॥ ११ ॥

मालेति । शक्तिदैवत्यशिवदैवत्योभयदैवत्यभेदात् एष मन्त्रः त्रिविधः । उक्तानि प्रातिपदिकानि शक्तिदैवत्यपक्षे यथालक्षणमितङीपूटाबन्तानि, शिवदैवत्यपक्षे यथास्थितानि, द्वंद्वदैवत्यपक्षे प्रत्येकं पदद्वयसमुच्चयरूपाणि पठनीयानीत्यर्थः । स्त्री-

1. श्रीबीज. T.

पुंमिथुनेति पद्यात्मकसमासत्वात् न स्त्रीपुंसेति समासान्तप्रत्ययप्रसङ्गः । [1]मालाविशेषणत्वाभिप्रायेण ता इति स्त्रीलिङ्गनिर्देशः । ते मालामन्त्राः प्रत्येकं पञ्चधा – शुद्धाः उपपदरहिताः त्रयः । नमः=नमोऽन्तिमाः नम इति पदेन प्रतिनामान्ते युक्तास्त्रयः । स्वाहा = स्वाहान्तिमाः प्रति प्रातिपदिकं स्वाहेति पल्लवान्ताः त्रयः । तृप्तिः = तर्पयामीति पदम् । न तु तृप्यत्विति । तदन्तिमनामानः त्रयः । जयौ = जय जयेति पदद्वयम् । तदन्तिमाः = प्रतिनामान्ते पल्लवः येषां ते त्रयः । इत्येवं मालामन्त्राः पञ्चदश भवन्तीत्यर्थः ॥ ११ ॥

एतदेव विवृणोति शक्तिमालेत्यादिभिः—

शक्तिमाला पञ्चधा स्याच्छिवमालापि तादृशी ।
द्वंद्वमालापि तादृक् स्यादेवं पञ्चदश क्रमात् ॥ १२ ॥

शुद्धा नमोऽन्ता स्वाहान्ता तर्पणान्ता जयान्तिमाः ।
प्रवृत्तयः पञ्चधा स्युर्मालासु निखिलास्वपि ॥ १३ ॥

शुद्धाः संबुद्धिमात्रा स्याज्जपस्तेन विधीयते ।
नमसा पूजनं कार्यं पादुकां पूजयामि च ॥ १४ ॥

---

1. मालाशब्दस्य T.

स्वाहेति होमवचनं तर्पयामीति तर्पणे ।
जयद्वंद्वसमायोगात् स्तुतिरुक्ता तु पञ्चमी ॥ १५ ॥

शक्तिमालेति । प्रवृत्तयः=मालामन्त्राणां प्रयोगाः । अथ शुद्धादिलक्षणम्—तेषां विनियोगं चोपपादयति त्रिभिः—शुद्धा इत्यादि । अत्र पूजनतर्पणहोमशब्दाः तत्फलपराः[1] ; जयप्रदाश्च, मन्त्रशक्तिमात्रेण, पुष्पाज्यतोयाभावेऽपि पूजादिसिद्धेः वक्ष्यमाणत्वात् । नमोऽन्तास्तु 'पादुकां पूजयामि' इति सप्ताक्षर्यापि, चकारात् नमःसमुच्चिता योजनीयाः । सा च पाठक्रमात् नमोऽनन्तरमेव ॥ १२-१५ ॥

एवं पञ्चविधो योगो मालानां त्रितये भवेत् ।
अतः पञ्चदशाख्याता मालाः श्रीललितामनोः ॥ १६ ॥
शुद्धानां च जयान्तानां संबुद्धिः सर्वनामसु ।
स्वाहान्तानां नमोऽन्तानां विभक्तिः सांप्रदानिकी ॥१७॥
द्वितीया तर्पयाम्यन्तमालानां विनियुज्यते ।
पञ्चानामपि मालानां भेदोऽयं वरवर्णिनि ॥ १८ ॥

एवमिति । मालानां त्रितये प्रत्येकं पाञ्चविध्यात् पञ्चदशेत्यर्थः । संबुद्धिः, विभक्तिः संबोधनप्रथमैकवचनम् । सांप्रदानिकी ; चतुर्थीविभक्तिः । "नमः स्वस्ति स्वाहा"

1. तत्फलदाः T.

इत्यादिना तथैव तद्योगे विधानात् । द्वितीया इति । तर्पयतेः कर्मसापेक्षत्वात् द्वितीयाविभक्तिरेव साधुः । शुद्धानामित्यादि बहुवचनानि तत्तन्मन्त्रपराणि ॥ १६-१८ ॥

शक्तेः शिवस्य द्वंद्वस्य पक्षकतिसयं क्रमात् ।
एकैकस्मात् कादिविद्याकादिवर्णात् समुत्थितम् ॥ १९ ॥

शक्तेरिति । कामराजविद्यायाः ककारादिप्रथमहृल्लेखान्तैः पञ्चभिः वर्णैः शक्तिमालामन्त्राः क्रमेण पञ्च जाताः । [1]हकारादिलकारान्तैः वर्णैः शैवाः । मायादिमायान्तैः मिथुनदैवत्याः ॥ १९ ॥

अतः सर्वागमेष्वेता गुह्याः पञ्चदश स्रजः ।
त्रितारी तारहृदयैरेकाशीतिशताह्वयैः ॥ २० ॥

अत इति । अतः = पञ्चदशी पञ्चदशाक्षरोत्पन्नत्वात् हेतोः सर्वमन्त्रेष्वपि, एताः = स्रजः मालामन्त्राः । त्रितारी = वाङ्मायाकमलाः । तारः = प्रणवः । हृदयम् = नमःशब्दः । एकाशीत्युत्तरशतानि त्रिपुरसुन्दरीत्यादीनि सम्राज्ञ्यन्तानि ॥ २० ॥

---

1. हकारादिलकारान्तार्णैः T.

संबुद्ध्यन्तैर्नमस्ते त्रिर्वह्निदारैश्च मण्डिता ।
शुद्धा या शक्तिदैवत्या प्रकृतिः सेतरस्रजाम् ॥ २१ ॥

संबुद्ध्यन्तैरिति । संबुद्धिः; संबोधनप्रथमैकवचनम्, तदन्तैः । 'नमस्ते त्रिः' इति स्वरूपम् । वह्निदाराः, स्वाहाशब्दाः; एतैः युक्ता । शिवदैवत्यद्वंद्वदैवत्ययोर्व्यावर्तनायाह—शक्तीति । इतरासां स्रजाम् अवशिष्टमालामन्त्राणां सैषा प्रकृतिः ॥ २१ ॥

इतराः चतुर्दशाप्येतद्विकृतय इति पर्यवसन्नमर्थमेवाह—

नमोऽन्तशक्तिमन्त्राद्याः जयान्तमिथुनान्तिमाः ।
अस्या विकृतयो ज्ञेयाः मालामन्त्राश्चतुर्दश ॥ २२ ॥

नमोऽन्तेति । यद्यपि प्रातिपदिकमात्राणामेव पूर्वमुद्धृतत्वात् विभक्तिसामान्यरहितस्य मालामन्त्रस्य पञ्चदशापि विकृतय एव, तथापि तादृशस्य मन्त्रत्वे मानाभावात् अक्षरोद्धारावसरे संबुद्ध्यन्तानामेवोद्धारात् 'त्रिपुरासिद्धिबोधनम्' इत्यादिना कण्ठरवेणापि संबोधनान्तस्यैवोद्धरिष्यमाणत्वात् तादृस्या एव शक्तिमालायाः प्रकृतित्वम् ॥ २२ ॥

सप्ताष्टमालामाहात्म्यं वक्तुं वर्षशतैरपि ।
न शक्यते वरारोहे पञ्चभिर्वदनैरपि ॥ २३ ॥
एकवारं प्रतिदिनं दश पञ्चस्रजो जपेत् ।
महापातकनिर्मुक्तः सर्वं पुण्यमवाप्नुयात् ॥ २४ ॥

सप्ताष्टमालामावर्त्य सप्ताष्टदिवसावधि ।
असाध्यामपि च वधूमाकर्षयति मोहिताम् ॥ २५ ॥

मासमेकं समावर्त्य सप्ताष्टस्त्रजमुत्तमम् ।
[1]असाध्ययाप्यसाध्याख्यैर्मुच्यते त्रिविधैर्गदैः ॥ २६ ॥

सप्ताष्टमालिकाजापी नित्यं पुण्यमयाकृतिः ।
ज्वलन्नग्निरिव त्रस्तैर्वीक्ष्यते भूतपूतनैः ॥ २७ ॥

सप्ताष्टेति । 'सप्ताष्टस्त्रजम्' इत्येकवचनमार्षम् । 'असाध्यामपि च वधूमाकर्षयति मोहिताम्' इत्यत्र 'असाध्यवध्वा-

---

1. असाध्येति । याप्यः, व्याधिविशेषः । यथा—

साध्या याप्या असाध्याश्च व्याधयस्त्रिविधा स्मृताः ।
सुखसाध्यः कष्टसाध्यो द्विविधः साध्य उच्यते ॥

याप्यलक्षणमाह—

यापनीयं तु तं विद्यात् क्रियां धारयते हिताम् ।
क्रियायां तु निवृत्तायां सद्यो यश्च विनश्यति ॥
प्राप्ता क्रिया धारयति सुखिनं याप्यमातुरम् ।
प्रपदिष्यदिवागारं स्तम्भो यत्नेन योजितः ॥
साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतां तथा ।
घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियावताम् ॥

"अक्रियावताम् । चिकित्सारहितानाम्" इति भावप्रकाशे ।

कर्षणम्' इत्येतत्, "सुवासिन्यर्चनप्रीता" इति सूचितश्रीमत्परदेवतैकरूपत्वापन्नसुवासिन्यनवद्ययजनार्थतया आचार्यसंप्रतिपन्नार्थमात्रपरतयैव बोध्यम्। असाध्यैः=वैद्यशास्त्रचिकित्सारहितैः। याप्यैः = कष्टसाध्यैः। साध्यैः = सुलभचिकित्सैः। गदैः = रोगैः। पूतनैः = ग्रहविशेषैः॥ २३–२७॥

पूजाहोमस्तर्पणं च मन्त्रशक्तिप्रभावतः।
पुष्पाज्यतोयाभावेऽपि जपमात्रेण सिद्ध्यति॥ २८॥

पूजेति। पुष्पादिपदत्रयं तत्तत्साधनद्रव्यमात्रोपलक्षणम्। एतैः मन्त्रैः पुष्पादिभिः पूजादिकं कर्तुमशक्तस्यायं प्रतिनिध्युपदेश इति न भ्रमितव्यम्। पूजादिष्वेव तेषां विनियोगाभावात्। न च मन्त्रलिङ्गैः तत्कल्पना। लिङ्गस्य सामान्यसंबन्धकारिप्रमाणान्तरसापेक्षस्यैव प्रयोजकत्वात्। ततश्च नमोऽन्तस्वाहान्ततर्पणान्तमन्त्रत्रयं पूजाहोमतर्पणजन्यफलेष्वपि[1] विनियुज्यते। पुष्पाभावेऽपीति। तत्साध्यपूजाद्यपेक्षया प्रकृतजपस्याधिक्यप्रशंसाध्वननमात्रार्थम्। शुद्धस्य जयान्तस्य च जपस्तुत्योर्विनियोगः प्रागुक्त एव॥ २८॥

सप्ताष्टमालाजपनं प्रत्यहं कर्तुमक्षमः।
प्रकृतिं शुद्धशक्त्याख्यां त्रिसंध्यं परिकीर्तयेत॥ २९॥

---

1. तर्पणजन्यफलेष्वपि T.

सर्वमालाजपोत्थं यत् फलं तत् पुरुषोऽश्नुते ।

सप्तेति । शुद्धमालायास्तु नित्यपूजाप्रतिनिधित्वमापदीत्युपरिष्टाद् वक्ष्यते । अत्र सप्तेति तु पञ्चदशमालासमष्टिजपस्यायं प्रतिनिधिः; न त्वेकैकस्येति । तत्तत्काम्योक्तदिनसंख्या तु आवश्यक्येव । सर्वेति । सर्वमालाजपोत्थं समष्टिजपजन्यं फलम् आप्नोति ॥ २९-॥

ऋषिश्छन्दोदेवताश्च विनियोगः पृथक् पृथक् ॥ ३० ॥

तत्तदादौ समुल्लिख्य फलश्लोकं च कीर्तयेत् ।
विशेषणान्यपि वदेदृषिदेवतयोर्बुधः ॥ ३१ ॥

ऋषिरिति । ऋषिः=मन्त्रद्रष्टा; छन्दः=मन्त्राक्षरसंख्यावच्छेदकम् । देवता=मन्त्रप्रतिपाद्या । विनियोगः=अङ्गाङ्गिभावनिबन्धनः प्रवृत्तिविशेषः । तत्तदिति=फलश्लोका उत्तरत्र वक्ष्यमाणाः पञ्चदश । ऋषिदेवतयोः विशेषणान्यपि प्रत्येकं विलक्षणानि वक्ष्यन्ते ॥ ३०, ३१ ॥

उपस्थपायुपत्पाणिवाग्घ्राणरसनादृशः ।
त्वक्श्रोत्रस्येन्द्रियस्याहंकृतेर्बुद्धिश्च चेतसः ॥ ३२ ॥
प्रधानपुंसोस्तत्त्वाधिष्ठायिनो वरुणादयः ।
विष्ण्वन्ता द्वादशादित्याः प्रातर्मध्याह्नसायगाः ॥ ३३ ॥

उपस्थेति । अत्र पच्छब्दः पादपरः, "पदङ्घ्रिश्चरणोऽस्त्रि-याम्" इत्यमरः । दश इति षष्ठ्येकवचनं प्रत्येकमिन्द्रियान्वयाभिप्रायम्; प्राण्यङ्गत्वाच्च । कर्मेन्द्रियाणि; ज्ञानेन्द्रियाणि च पञ्चपञ्च[1] इन्द्रियाणि, अहंकारबुद्धिचित्तानि तत्त्वानि । प्रधानेति । प्रधानपुंसोः; प्रधानपुरुषतत्त्वे चेति पञ्चदशाधिष्ठातारो अरुणादिपञ्चदशादित्याः पञ्चदशानां मालानां क्रमाद् ऋषयः । 'उपस्थेन्द्रियाधिष्ठाय्यरुणादित्य ऋषये नमः' इत्यादिः प्रथमपञ्चकद्वये प्रयोगः । 'अहंकारतत्त्वाधिष्ठायि त्वष्ट्रादित्याय' इत्यादिः चरमपञ्चके । 'ब्रह्मात्मने प्रातरादित्याय' इत्यादिः चरमत्रितये । भैरवात्मानः सर्वेऽत्रर्षय इति तु समयिनां संप्रदायः ॥ ३२ - ३३ ॥

अरुणो मित्रधातारावर्यमा चांशुमान् भगः ।
इन्द्रो विवस्वान् पूषा च सवितृत्वष्टृविष्णवः ॥ ३४ ॥

ब्रह्मविष्णुशिवात्मान [2]इति पञ्चदशर्षयः ।

अरुणादीन् द्वादशोद्धरति—अरुण इत्यादि ॥ ३४–॥

अथ च्छन्दांसि कथ्यन्ते क्रमात् पञ्चदशस्रजाम् ॥३५॥

---

1. पञ्च पञ्चेति-दशेत्यर्थः । 2. आत्मानः प्रातर[illegible]

गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ।
त्रिष्टुब् जगत्यतिजगच्छक्करी चातिशक्करी ॥ ३६ ॥

अष्टयत्यष्टी धृतिश्चातिधृतिः पञ्चदशी कृतिः ।

अथेति । अत्र अतिजगच्छन्दोऽतिजगतीपर्यायः ; "यदि जगत् सामाम्नायणाम्नान्" इति श्रुतौ, "जागतीच्छन्दस्कायामृचि उत्पन्नं साम" इति व्याख्यानदर्शनात् । अष्टयत्यष्टी दीर्घान्तौ, ह्रस्वान्तपदद्वयसमासो वा । पञ्चदशच्छन्दः कृतिः, विशेष्याभिप्रायेण स्त्रीत्वम् । अथ प्रथममालामन्त्रे त्रिचत्वारिंशद्गायत्रीच्छन्दांसि, अन्त्यं नृचित् । एवमुष्णिगादिरूपत्वमूह्यम् । वस्तुतस्तु तत्तच्छन्दोऽक्षरसंख्यान्यूनाधिकभावबाहुल्येऽपि तत्तच्छन्दस्कत्वेनैव तस्य तस्य ज्ञानमदृष्टार्थमेवेति छन्दोभास्करादौ विवेचितमस्माभिः ॥ ३५, ३६ ॥

देवता अथ वक्ष्यन्ते सावधाना शृणु प्रिये ॥ ३७ ॥

त्रयो भुवननाथाद्या मरुतश्च मरुत्वतः ।
आद्यन्तमध्यमा वर्णाः सत्त्वराजसतामसाः ॥ ३८ ॥

व्योम्नश्चन्द्रमसोऽर्णौ च भोगमोक्षप्रदो क्रमात् ।
एकादश तुरीयावप्येवं स्युः सविशेषणाः ॥ ३९ ॥

देवता इति । भुवननाथायाः = ह्रींकारस्य । मरुतः = ककारस्य च । मरुत्वतः = लकारस्य । आद्यन्तेति । कादि-विद्यायां हि त्रयो ह्रींकाराः । तत्र प्रथमकूटस्थः सात्त्विकः । अन्त्यकूटस्थो राजसः । मध्यमकूटस्थः तामसः । एवं ककारत्रयस्य लकारत्रयस्य च ह्रींकारत्रयवदेव सात्त्विकादिविशेषणत्रयमूह्यम् । प्रथमतृतीयमध्यमकूटस्थाः सात्त्विकराजसतामसा इत्यर्थः ॥ ३७, ३८ ॥

व्योम्न इति । व्योम्नः=हकारस्य । चन्द्रमसः=सकारस्य । द्वितीयकूटे प्रथमो हकारो भोगदः । द्वितीयो मोक्षदः । एवं द्वैतीयीकसकारो भोगदः । तार्तीयीको मोक्षदः । एकादश-स्वर एकारः । तुरीयः ईकारः । तौ द्वावपि क्रमाद् भोग-मोक्षदौ । तुरीया अपि इति पाठे द्विवचनान्त एव पदच्छेदः । अच आदेशीयवकारस्य विकल्पेन लोपविधानात् । एवम् इत्युत्तरान्वयि । पञ्चदशवर्णा एवं पूर्वोक्तरीत्या सविशेषणाः स्युः, विशेषसहिताः कार्या इत्यर्थः ॥ ३९ ॥

वर्णभट्टारकाः पीठास्तत्र शक्तिशिवौ स्थितौ ।
भिन्नभिन्नह्वयौ देवौ तयोः कामेश्वरः शिवः ॥ ४० ॥

वर्णेति। ते च वर्णाः पीठाः शिवशक्त्योः तत्रावस्थानात्। पुराणेषु—अष्टोत्तरशतं देवीपीठाः, अष्टषष्टिः शिवपीठाश्च ये पाद्मस्कान्दादिषु वर्णिताः, तेषु सर्वेष्वपि शिवनामानि शक्तिनामानि च भिन्नभिन्नान्येव प्रसिद्धानि। प्रकृतेऽपि तथैवेत्युच्यते। भिन्नभिन्नेति। तानि च नामानि अनुपदमेव च वर्ण्यन्ते[1]। तेषु शिवनाम्नां कामेश्वर इत्येव विशेष्यपदम्। यत्र कामेश्वर इत्येव नाम, यथा प्रकृतिमालायाम्, तत्र वारद्वयं कामेश्वर-पदप्रयोगात् शिवपदसहितं तत् प्रयोक्तव्यमिति स्फोरणार्थं शिव इत्युक्तम्। तच्च पदं विशेष्यस्थान एवेति संप्रदायादवगन्तव्यम्॥ ४०॥

विशेष्या ललितैवोक्ता महाभट्टारिका परा।
शिवाङ्कनिलया शक्तिः प्रधानं शक्तिपञ्चके॥ ४१॥

विशेष्या इति। शक्तिनाम्नां ललितेत्येव विशेष्यपदम्। परं तु महाभट्टारिकापदशिरस्कं तु तत्। एवं च शाक्तिमालापञ्चके, 'सात्त्विककककारभट्टारकपीठस्थितामुस्कनामककामेश्वराङ्कनिलयायै अमुकललितामहाभट्टारिकायै देवतायै नमः' इत्यादि-प्रयोगः॥ ४१॥

1. वक्ष्यन्ते T.

ललितामण्डिताङ्कस्तु महाभट्टारकः शिवः ।
देवतापञ्चके शैवे द्वंद्वस्य मिथुनं द्वयोः ॥ ४२ ॥

ललितेति । 'भोगप्रद ह्रकारभट्टारकपीठस्थितामुकनामक-ललितामहाकामेश्वरीमण्डिताङ्कायामुकनामकश्रीमहाकामेश्वर-भट्टारकाय देवतायै नमः' इत्यादिरीत्या प्रयोग इत्यर्थः । द्वंद्वमालापञ्चकेऽप्याह—द्वंद्वस्येति । द्वयोः शक्तिशिवयोः मिथुनं प्रधानम् । तेनोभयत्र महाभट्टारकपदशिरस्कतया द्वंद्वसमासान्ते मिथुनपदं च प्रयोज्यमिति सिद्ध्यति । यथा—'तामसह्रींकारभट्टारकपीठस्थितपरस्पराङ्कनिलयामुकनामकललिता-महाकामेश्वरीपराभट्टारिकामुकनामकश्रीमहाकामेश्वरभट्टारकमिथु-नाय देवतायै नमः' इत्यादिरीत्या प्रयोग ऊह्यः ॥ ४२ ॥

अथामुकपदस्थानेषु निक्षिप्यानि नामानि क्रमेणोद्दि-शति—

कामेश्वरेण कामेश्वर्यैकवीरेण चैकला ।
ईश्वरेणेश्वरीलक्षसारेण ललिताह्वया ॥ ४३ ॥

हृच्छयेन तु हृल्लेखा हलिन्या हलिको मतः ।
सरस्वत्या च सर्वज्ञः कमलया कालमर्दनः ॥ ४४ ॥

हरवल्लभया युक्तो हरनाथो महेश्वरः ।
लक्ष्म्या युक्तो ललज्जिह्वो हिरण्या हृदयेश्वरौ ॥ ४५ ॥

भट्टारकौ तु सकलजननी सकलेश्वरौ ।
ततः शिवे कामकोटिकरुणाकरनामकौ ॥ ४६ ॥

चतुर्दश मनोर्लीलावती लावण्यनामकौ ।
ह्रीरेश्वरी हिरण्याद्या बाहू इति तु देवताः ॥ ४७ ॥

कालेश्वरेणेति । प्रथमपञ्चके—पुंलिङ्गपदानां तृतीया सहार्थे । तेन तत्र शिवानामप्राधान्यम् । शक्तीनामेव तु प्रथमान्तपदनिर्दिष्टत्वात्[1] प्राधान्यम् । साहित्यं तु, शिवाङ्कनिलयत्वरूपम् । द्वितीयपञ्चके तु—शिवशक्तिपदयोः विभक्तिवैपरीत्यात् गुणप्रधानभावोऽपि विपरीतः । साहित्यं तु, शक्तिमण्डिताङ्कत्वरूपम् । तृतीयपञ्चके तु—द्वंद्वेन स्त्रीपुंसयोः निर्देशात् उभयपदार्थप्रधानतेति ध्वनितम् । उभयप्राधान्यं च परस्परस्य परस्पराङ्कमण्डनत्वेनेति ध्वन्यम् । तयोः तादृशगुणप्रधानभावसाम्याकारमुभयप्राधान्यम् आचार्यभगवत्पादैरुपवर्णितम्;

1. निर्देश्यत्वात् T.

"अतः शेषः शेषीत्ययमुभयसाधारणतया
स्थितः संबन्धो वां समरसपरानन्दपरयोः ।"

इति । अष्टममन्त्रे कमल्येति निर्देशस्य छन्दोऽनुगुणतार्थत्वेन 'कमलया' इत्याबन्ततृतीयात्वमेव । न पुनः ङीबन्तस्य । चतुर्दश मनोरिति । तर्पणान्तमिथुनमालामन्त्रस्येत्यर्थः । हिरण्याद्या बाहुः ; हिरण्यबाहुरेव । "हिरण्य पूर्वं कशिपुं प्रचक्षते" इतिवत् वृत्तानुगुण्येन[1] बाहुशब्दार्थानन्यताभ्युपगमात् तथा निर्देशः । स्पष्टमन्यत् ॥ ४३-४७ ॥

विनियोगं प्रवक्ष्यामि सावधाना शृणु प्रिये ।
खड्गश्च पादुकासिद्धिरञ्जनं बिलसिद्धियुक् ॥ ४८ ॥
वाग्देहलोहसिद्ध्यश्च अणिमाद्यष्टसिद्धयः ।
वश्याकर्षणसंमोहस्तम्भनानि ततः परम्[2] ॥ ४९ ॥
नित्यानन्दः पुमर्थाश्च भोगमोक्षौ परात्परे ।
एताः पञ्चदश प्रोक्ता मालानां फलतां गताः ॥ ५० ॥

विनियोगमिति । विनियोगम् ; अङ्गाङ्गिभावफलजनकत्वमिति यावत् । खड्गादिसिद्धिरूपं तद् वक्ष्यमाणश्लोकैरेव

---

1. वृत्त्यानुगुण्येन T. 2. स्तम्भनानि च सर्वशः T.

व्यक्तं भविष्यति। 'वाग्देहलोहसिद्धयः' इति त्रीणि भिन्नानि फलानि। सिद्धय इति वक्तव्ये सिद्धय इति छान्दसम्। अणिमाद्यष्टसिद्धय इत्येकं फलम्। पुरुषार्थचतुष्टयस्य भोग-मोक्षयोश्च तथात्वमेव बोध्यम् ॥ ४८-५० ॥

अथ जपारम्भे अवश्यकथनीयान् श्लोकानाह—

तादृशं खड्गमाप्नोति येन हस्तस्थितेन वै।
अष्टादशमहाद्वीपसम्राड् भोक्ता भविष्यति ॥ ५१ ॥

तादृशं पादुकायुग्ममवाप्नोति तव भक्तिमान्।
यदाक्रमणमात्रेण क्षणात् त्रिभुवनक्रमः ॥ ५२ ॥

सिद्धाञ्जनं समासाद्य तेनाञ्जितविलोचनः।
निधिं पश्यति सर्वत्र भक्तस्तेन समृद्धिमान् ॥ ५३ ॥

बिलद्वारमपावृत्य पातालतलयोगिनः।
वीक्ष्य तेभ्यो लब्धसिद्धिस्तव भक्तः सुखी भवेत् ॥ ५४ ॥

वाक्सिद्धिर्द्विविधा प्रोक्ता शापानुग्रहकारिणी।
महाकवित्वरूपा च भक्तस्ते स्याद् द्वयास्पदम् ॥ ५५ ॥

तथा शुध्यति ते भक्तो यच्छरीरस्य पार्वति।
तप्तकाञ्चनगौरस्य कदापि क्वापि न क्षयः ॥ ५६ ॥

त्वद्भक्तहस्तस्पर्शेन लोहोऽप्यष्टविधः शिवे ।
काञ्चनीभावमाप्नोति यथा स्याच्छिवतुल्यता ॥५७॥

येऽष्टाणुत्वमहत्वाद्याः स्वेच्छामात्रेण कल्पिताः ।
तव भक्तशरीराणां ते स्युर्नैसर्गिका गुणाः ॥ ५८ ॥

शरीरमर्थं प्राणांश्च निवेद्य निजभृत्यवत् ।
तव भक्तं निषेवन्ते वशीभूता नृपादयः ॥ ५९ ॥

लोहप्राकारसंगुप्ता निगडैर्यन्त्रिता अपि ।
त्वद्भक्तैः कृष्यमाणाश्च समायान्त्येव योषितः ॥ ६० ॥

अम्बिके तव भक्तानामवलोकनमात्रतः ।
कृत्याकृत्यविमूढा स्युर्नरा नार्यो नृपादयः ॥ ६१ ॥

देवि त्वद्भक्तमालोक्य शरीरेन्द्रियचेतसाम् ।
स्तम्भनाद् वैरिणः स्तब्धा स्वस्वकार्यपराङ्मुखाः ॥

धर्मश्चार्थश्च कामश्च मोक्षश्चेति चतुष्टयम् ।
तव भक्तः स्वभक्तेभ्यः प्रयच्छत्यप्रयासतः ॥ ६३ ॥

अलौकिकं लौकिकं चेत्यानन्दद्वितयं सदा ।
सुलभं परमेशानि त्वत्पादौ भजतां नृणाम् ॥ ६४ ॥

या भोगदायिनी देवी जीवन्मुक्तिप्रदा न सा ।
मोक्षदा तु न भोगाय ललिता तूभयप्रदा ॥ ६५ ॥

एतत् पञ्चदश श्लोकान् विनियोगोत्तरं पठेत् ।
मालामन्त्रस्ततो देवि तत्तत्कामनया जपेत् ॥ ६६ ॥

इति श्रीसर्वतन्त्रोत्तमे श्रीललितारहस्य-
परिशिष्टतन्त्रे श्रीपार्वतीपरमेश्वर-
संवादे श्रीविद्यापञ्चदशीमाला-
मन्त्रोद्धारकथनं नाम
प्रथमः पटलः

—: * :—

तादृशं खड्गमित्यादिना । हस्तस्थितेन दूरस्थानपि परान् हत्वा पुनः हस्तमागतेन । वाक्सिद्धिरिति । सुवर्ण-रजतताम्रपित्तलकांस्यसीसत्रपुरङ्गभेदाद् अष्टलोहाः । अनुक्त-षडङ्गन्यासानां मन्त्राणां हृल्लेखादीर्घषट्केन षडङ्गद्वयस्य विधानात् ऋष्यादिन्यासोत्तरं षडङ्गन्यासद्वयं विधाय, मनसा ध्यात्वा, तत्त-न्मन्त्रारम्भे तं तं श्लोकं पठेदित्यर्थः ।

एतन्मालापञ्चदशकस्य पञ्चदशनित्यासमष्टिरूपललितादैवत्य-श्रीविद्यापञ्चदशीपञ्चदशाक्षरोत्पन्नतया तन्मूलमन्त्रवदेव बीज-शक्तिकीलानि न्यासरचना चेत्यपि सुवचम् ॥ ५१-६६ ॥

श्रीगम्भीररायभारतितनुजनुषा भास्कराग्निचिता ।
उन्नीतायामिह गुरुकलानामनि च कृतौ समर्थायाम् ॥
श्रीविद्यामालामणिपिटककीलोद्धृतिविधौ लिपेः सम्यक् ।
व्यतनुत संख्योद्धारं प्रीत्यै देव्याः प्रथमस्य पटलस्य ॥

इति श्रीभास्करोन्नीते रहस्यपरिशिष्टके ।
ललितायाः लजोद्धार आद्योऽयं पटलो गतः ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीण-
निखिलतन्त्रस्वतन्त्रश्रीमद्गम्भीररायभारती-
तनुजनुषा श्रीमद्भासुरानन्दनाथदीक्षा-
नामजुषा श्रीमद्भास्कररायेणो-
न्नीतायां श्रीललितारहस्य-
परिशिष्टतन्त्रव्याख्यायां
गुरुकलाप्रकाशिकायां
प्रथमः पटलः
संपूर्णः

## द्वितीयः पटलः

श्रीदेव्युवाच—

प्रकृतेरक्षरोद्धारं वर्णसंख्यां च मे वद ।
[1]यया विज्ञातया ज्ञाता विकाराः स्युश्चतुर्दश ॥ १ ॥

ईश्वर उवाच—

शृणु देवि महागुह्यं यन्मां त्वं परिपृच्छसि ।
मालामन्त्रभवान् वर्णांस्तत्तत्संख्याश्च ते ब्रुवे ॥ २ ॥

प्रकृतेरिति । 'प्रकृतेः' इत्यारभ्य, 'ब्रुवे' इत्यन्तो ग्रन्थः स्पष्टार्थः ॥ १, २ ॥

स्फुटमथ मन्त्रोद्धारमारभतेऽर्धेन—

त्रितारीं प्रणवं प्रोच्य नमस्त्रिपुरसुन्दरि ॥ २ ॥

त्रितारीति । त्रितारीप्रणवौ व्याख्यातौ । त्रिपुरसुन्दरीति ह्रस्वान्तम्, प्रकृतित्वात् । एवमत्र सर्वाणि संबुद्ध्यन्तान्येवोद्धीयन्ते ॥ २ ॥

---

1. यथा T.

अस्याःशरीरे अर्चनीयाः षडङ्गदेवता आह सपादश्लोकेन—

हृदयाद् देविशब्दान्ते शिरोदेवीति कीर्तयेत् ॥ ३ ॥

शिखादेविपदं प्रोच्य कवचाद् देविशब्दतः ।
नेत्रदेव्यस्त्रदेवीति,

हृदयाद् देवीति । हृदयशब्दात् परो देवीशब्दः, तदन्ते शिरोदेवीति पदम् । अत्र देवीति पदषट्कं संबुद्ध्यन्तम् । नेत्रदेव्यस्त्रदेव्योः संधिः । अनङ्गकुसुमादौ अकारपरित्यागप्रश्लेषेणोद्धारज्ञापनात्[1] । एवमुत्तरत्रापि संधयो द्रष्टव्याः ॥ ३ - ४ ॥

अथ त्रिकोणरेखासु त्रिपञ्चकं मध्ये चैकमिति क्रमेण पूजनीयाः षोडश नित्या आह पादोनश्लोकत्रयेण—

................कामेश्वरि भगेति च ॥ ४ ॥

मालिनीति पदं प्रोच्य नित्यक्लिन्न उदीरयेत् ।
भेरुण्डे वह्निवाशब्दात् सिनिशब्दो महापदम् ॥ ५ ॥

---

1. ज्ञापकात् P.

वज्रेश्वरि शिवाद्‌दूति त्वरिते कुलसुन्दरि ।
नित्ये नीलपताकेऽतो विजये सर्वमङ्गले ॥ ६ ॥

ज्वालामालिनि चित्रे च महानित्ये पदं ततः ॥

कामेश्वरीति । अत्र, 'वह्निवासिनि' इत्येकं नाम । तन्त्रान्तरे शिवाद् दूतीति शिवपदस्य ह्रस्वान्तपाठ एवात्र विवक्षितः । तन्त्रराजे तु—पर्यायप्रतिपत्त्यपेक्षया दीर्घान्तस्यैवोद्धारदर्शनात्[2] इह ह्रस्वान्तपाठो नानुपपन्नः ॥ ४ - ६ ॥

अथ सिद्धदिव्यमानवभेदेनौघत्रयप्रतिपाद्यान् गुरुपङ्क्तिक्रमविशेषान् सप्रपञ्चं कलयति[3] सपादपञ्चश्लोक्या—

परमेश्वरशब्दात् तु परमेश्वरि कीर्तयेत् ॥ ७ ॥

मित्रेशमयिषष्ठीशमय्युड्डीशमयीति च ।
चर्यानाथमयि प्रोच्य लोपामुद्रामयीति च ॥ ८ ॥ मयि

अगस्त्यमयि शब्दान्ते कालतापनमय्यथ ।
धर्माचार्यमयि प्रोच्य मुक्तकेशेश्वरान्मयि ॥ ९ ॥

---

2. कथयति P. 3. दर्शनेऽपीह T.

तथा दीपकलानाथमयि शब्दं प्रकीर्तयेत् ।
विष्णुदेवमयि प्रोच्य प्रभाकरपदात् पुनः ॥ १० ॥

देवशब्दान्मयि पदं तेजोदेवमयीति च ।
मनोजदेवशब्दान्ते मयि कल्याणदेवतः ॥ ११ ॥

मयिरत्नाद् देवमयि वासुदेवान्मयीत्यपि ।
श्रीरामानन्दमयि च,.................... ॥

परमेश्वरेति । अथ मध्यश्रप्राकृत्यश्रयोरन्तरालदेशे श्री गुरुपूजा । ते च गुरवः ; कादिहादिभेदेन भिन्नभिन्नाः । एकैकस्मिन् मते कुलावतारविद्यावतारगुरवः प्रत्येकं दिव्य-सिद्धमानवौघभेदेन त्रित्रिविधाः । तत्र दिव्यौघाः, प्रायेण सप्त सप्तैव ; सिद्धौघाः, चतुश्चतुर्भेदाः ; मानवौघाः, अष्टाष्टविधाः । क्वचित् न्यूनाधिकसंख्या अपि । कतिपये तु त्रित्रिसंख्या अपीति । एवं सर्वेऽप्योघाः[1] ; "एते च मतभेदेन नव पङ्क्ति-रूपाः गुरवो यष्टव्याः" इति श्रीविद्यारण्यचरणैः श्रीविद्यार्णवे सविस्तरं प्रतिपादितम् ॥

---

1. एतेन K.

क्वचित् तन्त्रे तु—दीक्षावतारगुरुपङ्क्तित्रयमात्रं विस्तराशक्तस्य पूज्यत्वेनाम्नायते । ते च गुरवः कामराजविद्योपासकस्य, लोपामुद्राविद्योपासकस्य ; मन्वादिविद्योपासकानाम्, ऊर्ध्वाम्नायोपासकानां च परस्परं भिद्यन्ते । एकैकस्यापि दक्षिणामूर्त्यानन्दभैरवादिबहुतरसंप्रदायभेदात् भिन्नभिन्ना एवेति नानुगताः सर्वेषां गुरवः ॥

अतः यदुपासकसंबन्धात् अत्र न यस्य लेखनम्, तदितरेषां मालामन्त्रेऽत्र लोपः । यथा, यवमये पुराडे, "व्रीहीणां मेध" इति मन्त्रलोपवत् । गुरुमण्डलपरित्यागेनेतरांशमात्रजपो वा । "यदन्तरिक्षम्" इति मन्त्रस्यौपासनाग्न्युपस्थाने गार्हपत्यमन्त्रपरिहारवत् । तत्तदभिमतौघनिवेशेनोहो वा, "अग्नये जुष्टम्" इत्यत्र, "सूर्याय जुष्टम्' इतिवत् । एवं पक्षत्रयान्यतमो यथान्यायमापद्येत । अतः सर्वोपासकसाधारण्याय मुनिवेदनागसंख्यान् त्रीनोघानुद्धरति ॥

अत्र परमेश्वरस्यापि परमेश्वरीति विग्रहेणैकं संबोधनं पदद्वयम् । तदारभ्य अगस्त्यमध्यन्ताः सप्त दिव्यौघः । कालतापनमुख्याद्याश्चत्वारः सिद्धौघः । विष्णुदेवाद्या अष्टौ मानवौघः । श्रीकारो रामानन्दे मन्त्रावयव एव । न श्लोकपूरणार्थं इति विवेकः । एवं लयाङ्गदेवता उक्ताः ॥ ७-१२ ॥

अथ त्रैलोक्यमोहननामकचक्रे त्रिरेखात्मके भूबिम्बे दश सिद्धयः, अष्टौ मातरः, दश मुद्राः, एका चक्रनाथा, समष्टियोगिनी चेति त्रिंशद् देवताः पादोनैः सप्तभिः संगृह्णाति—

……………अणिमासिद्धिबोधनम् ॥ १२ ॥

ततश्च लघिमासिद्धे महिमासिद्ध एव च।
ईशित्वादपि सिद्धे स्यात् वशित्वात् सिद्धिबोधनम् ॥

प्राकाम्यसिद्धे भुक्त्यन्ते सिद्ध इच्छा यथोत्तरम्[1]।
सिद्धे प्राप्तिपदात् सिद्धे सर्वकामपदात् पुनः ॥ १४ ॥

सिद्धे ब्राह्मि च माहेश्वर्युक्त्वा कौमारिकीर्तयेत्।
वैष्णवीति च वाराहि ततो माहेन्द्रिकीर्तयेत् ॥ १५ ॥

चामुण्डे च महालक्ष्मि सर्वसंक्षोभणीत्यतः।
सर्वविद्राविणि प्रोच्य सर्वाकर्षिणिशब्दतः ॥ १६ ॥

सर्वाद् वशंकरि प्रोच्य सर्वोन्मादिनिशब्दतः।
सर्वान् महाङ्कुशे सर्वखेचरिप्रोच्य सर्वतः ॥ १७ ॥

---

1. पदोत्तरम T.

बीजे सर्वपदाद्योने कथयित्वा ततो वदेत् ।
सर्वत्रिखण्डे त्रैलोक्यशब्दान्मोहनचक्रतः ॥ १८ ॥

स्वामिनीति प्रकटतो योगिनीति पदं वदेत् ॥

अणिमेति । अत्र अणिमासिद्धिपदस्य बोधनं संबुद्धिः, 'सिद्ध एव च' इत्यत्र संबुद्ध्यन्त एव [1]च्छेदः । एवमुत्तत्रापि । अणिमादिपदत्रयमप्यदन्तत्वेनाबन्तम् । अतो न ह्रस्वान्ततापत्तिः । सर्वाद् इत्यस्य शब्दपरत्वेन सर्वनामसंज्ञाभावात् न तत्र स्मादेशः । 'चामुण्डे' 'महालक्ष्मि' इत्यपि च संक्षोभिण्यादि शब्देषु ल्युडन्तेभ्यो न ङीप् । सर्वान् संक्षोभयतीत्यर्थेऽपि ; "ण्यासश्रन्थो युच्" इति स्त्र्यधिकारपठितेन युचा तद्बाधेन ततो ङीपोऽप्रसक्तेः । अतः ताच्छील्ये णिनिः । ततः, "ऋन्नेभ्यः" इति ङीप् । तेनेकारोभान्त्यस्वराण्येतानि चत्वारि नामानि, सर्वसंक्षोभिणि, विद्राविण्याकर्षिण्युन्मादिनीति ॥ १२-१८ ॥

अथ द्वितीयावरणदेवताः षोडशारस्थाः षोडश, तच्चक्रनाथायोगिन्यौ चेत्यष्टादशपदान्युद्धरति सार्धैः चतुर्भिः किंचिदधिकै :—

1. भेदः T.

कामाकर्षणि शब्दान्ते बुद्धयाकर्षणि कीर्तयेत् ॥१९॥

अहंकाराकर्षणीति शब्दाकर्षणि कीर्तयेत् ।
स्पर्शाकर्षणि शब्दान्ते रूपाकर्षणि कीर्तयेत् ॥ २० ॥

रसाकर्षणिशब्दान्ते गन्धाकर्षणि कीर्तयेत् ।
चित्ताकर्षणिशब्दान्ते धैर्याकर्षणि कीर्तयेत् ॥ २१ ॥

स्मृत्याकर्षणिशब्दान्ते नामाकर्षणि कीर्तयेत् ।
बीजाकर्षणिशब्दान्ते आत्माकर्षणि कीर्तयेत् ॥ २२ ॥

अमृताकर्षणीत्युक्त्वा शरीराकर्षणीति च ।
सर्वाशापरिपूरेति कचक्रस्वामिनीति च ॥ २३ ॥

गुप्तयोगिनि............................ ।

कामेति । कामादीन् आकर्षयतीत्यर्थे आकर्षणी-शब्दाः सर्वे ल्युडन्ताः, न पुनः णिन्यन्ता इति भ्रमितव्यम् । अहंकारात्मामृतशब्देषु पुरतो यणादेशोऽपि कार्यः । वक्ष्यमाणाक्षरसंख्यानुगुण्यात् ॥ १९ - २३ - ॥

अथ तृतीयावरणेदेवता अष्टौ, चक्रनाथायोगिन्यौ चेति दश नामान्युद्धरति किञ्चिदूनेन पादोनश्लोकत्रयेण

········अथानङ्गकुसुमेऽनङ्गमेखले ।
ततश्चानङ्गमदनेऽनङ्गाच्च मदनातुरे ॥ २४ ॥

तदुत्तरेऽनङ्गरेखेऽनङ्गवेगिन्यशब्दतः ।
नङ्गाङ्कुशेऽनङ्गशब्दान्मालिन्या बोधनं वदेत् ॥२५॥

सर्वसंक्षोभणाचक्रस्वामिनीति च गुप्ततः ।
तरयोगिनि शब्दाच्च········· ।

**अथेति ।** अत्र अनङ्गेत्याद्याकाराणां पूर्वैः पूर्वैः एकारैः सरूपमाकारप्रश्लेषेण यणादेशश्च कथितः ॥ २४ - २६ - ॥

अथ चतुर्थावरणदेवताः चक्रनाथायोगिनीभ्यां सह षोडशोच्यन्ते, आद्यन्तयोरेकाधिकपादया चतुःश्लोक्या—

·········सर्वसंक्षोभिणीति च ॥ २६ ॥

सर्वविद्राविणीत्युक्त्वा सर्वाकर्षणिशब्दतः ।
सर्वाह्लादिनिशब्दाच्च सर्वसंमोहिनीति च ॥ २७ ॥

सर्वस्तम्भिनिशब्दाच्च सर्वजृम्भिणिशब्दतः ।
सर्वाद्वशंकरिपदं सर्वरञ्जनिशब्दतः ॥ २८ ॥

सर्वोन्मादिनिशब्दाच्च पदं सर्वार्थसाधिनि ।
सर्वसंपत्तिशब्दान्ते पूरणीति पदं वदेत् ॥ २९ ॥

सर्वमन्त्रमयीत्युक्त्वा सर्वद्वंद्वक्षयंकरि ।
सर्वसौभाग्यदायेति कचक्रस्वामिनीति च ॥ ३० ॥

संप्रदायाद् योगिनीति......... ।

सर्वेति । अत्र संक्षोभणादयः शब्दाः ताच्छील्येऽपि णिन्यन्ताङीबन्ताः । अतो ह्रस्वेकारोपान्त्यस्वरा दश शब्दाः । 'पूरणि' इत्यकारोपान्त्य एव बहुसंमतः पाठः । "अप्पूरणी प्रमाण्योः" इति प्रयोगदर्शनात् । अनेन अन्तर्भावितण्यन्तात् पूर्यतेरेव ल्युट् । न पूरयतेः इति द्रष्टव्यम् ॥ २९-३०-॥

अथ दश पञ्चमावरणदेवताः चक्रस्वामिनी योगिनी चेति द्वादश नामान्युद्धरति चतुर्भिः श्लोकैः आद्यन्तयोरेकैकपादोनैः[1]–

...............सर्वसिद्धिप्रदे ततः ॥ ३१ ॥

---

1. आद्यन्तपादोनया चतुश्श्लोक्या P.

सर्वसंपत्प्रदे प्रोच्य पश्चात् सर्वप्रियंकरि ।
सर्वमङ्गलतः कारिण्युक्त्वा सर्वाश्च कामतः ॥ ३२ ॥

प्रदे सर्वपदाद् दुःखविमोचनिपदं वदेत् ।
सर्वमृत्युप्रशमनि सर्वविघ्ननिवारिणि ॥ ३३ ॥

सर्वाङ्गसुन्दरिपदं सर्वसौभाग्यदायिनि ।
सर्वार्थसाधकाच्चक्रस्वामिनीति पदं वदेत् ॥ ३४ ॥

कुलोत्तीर्णाद् योगिनीति........ ।
॥

सर्वेति । अत्र, 'सर्वमङ्गल-' इत्याद्यतः परं, 'कारिणि', 'दायिनि' 'निवारिणि' इति पदेषूपान्त्यस्वरा इकाराः । अन्येषामकार एव । 'शमनि' इत्यत्र पूरणीवद् रूपम् ॥ -३१ -३४- ॥

अथ षष्ठावरणे पूर्ववद् द्वादश नामान्युद्धरति पादेनादितः सहितैस्त्रिभिः श्लोकैः—

..................सर्वज्ञे सर्वशब्दतः ।
शक्ते सर्वैश्वर्यपदात् प्रदे इति समुच्चरेत् ॥ ३५ ॥

सर्वज्ञानमयिप्रोच्य सर्वव्याधिविनाशिनि ।
सर्वाधारस्वरूपे च सर्वपापहरे तथा ॥ ३६ ॥

सर्वानन्दमयीत्युक्त्वा सर्वरक्षास्वरूपिणी ।
सर्वप्सितप्रदे प्रोच्य सर्वरक्षाकरात् पुनः ॥ ३७ ॥

चक्रस्वामिनिशब्दान्ते निगर्भाद्योगिनीति च ।

सर्वज्ञ इत्यादि । अत्र, 'विनाशिनि', 'रूपिणि' इति शब्दाविकारोपान्त्यस्वरौ ॥ - ३५ - ३७ ॥

अथ सप्तमावरणदेवतानां चक्रनाथायोगिनीभ्यां सह दश नामान्युद्धरति सपादाभ्यां द्वाभ्याम्—

वशिनीति पदं प्रोच्य कामेश्वरि च मोदिनि ॥ ३८ ॥

विमले चारुणे पश्चाज्जयिनीति पदं वदेत् ।
सर्वेश्वरिपदं प्रोच्य कौलिनीति च कीर्तयेत् ॥ ३९ ॥

सर्वरोगहराचक्रस्वामिनीति रहस्यतः ।
योगिनीति समुच्चार्य,......................॥

वशिनीत्यादि । स्पष्टोऽर्थः ॥ ३८, ३९ ॥

अथायुधदेवताः चतस्रः, अष्टमावरणे देवता अपि चतस्रः, चक्रनाथायोगिन्यौ द्वे इति दश नामानि निर्दिशति पादसहिताभ्यां द्वाभ्याम्—

...............ततो बाणिनि चापिनि ॥ ४० ॥

पाशिन्यङ्कुशिनि प्रोच्य महाकामेश्वरीति च ।
महावज्रेश्वरिपदं महोर्ध्वं भगमालिनि ॥ ४१ ॥

महाश्रीसुन्दरीत्युक्त्वा सर्वसिद्धिप्रदात् पुनः ।
चक्रस्वामिन्यतिपदाद् रहस्यादथ योगिनि ॥ ४२ ॥

तत इति । स्पष्टोऽर्थः ॥ -४०-४२ ॥

अथ नवमावरणदेवतां चक्रनाथायोगिनीभ्यां सह बिन्दुचक्रे निर्दिशति सार्धश्लोकेन—

श्रीश्रीपदान्महाभट्टारिके पदमुदीरयेत् ।
सर्वानन्दमयाच्चक्रात् स्वामिनीति पदं वदेत् ॥ ४३ ॥

परापररहस्याच्च योगिनि प्रोच्यते पदम् ।

श्रीश्रीति । सर्वानन्दमयात् चक्रात्; बिन्दुचक्रादिति यावत् ॥ ४३- ॥

अथ नवचक्रनाथानामान्युद्धरति द्वाभ्याम्—

त्रिपुरे त्रिपुरेशीति तथा त्रिपुरसुन्दरि ॥ ४४ ॥

त्रिपुराद्वासिनिपदं त्रिपुराश्रीपदं तथा ।
त्रिपुरान्मालिनि प्रोच्य त्रिपुरात् सिद्धिबोधनम् ॥ ४५ ॥

त्रिपुराम्बाबोधनं च महात्रिपुरसुन्दरि ।

त्रिपुरे इति । त्रिपुरात् सिद्धिबोधनम् ; 'त्रिपुरासिद्धि-बोधनम्' इति संबोधनम् । इकारान्तटावन्तयोः संबुद्धौ वैल-क्षण्याभावेन प्रकृतिमन्त्रोद्धारनिर्वाहाभिप्रायेण, 'सिद्धे' इत्यु-क्तावपि आवन्त एव शब्दः तन्त्रान्तराविरोधाय स्वीकार्यः । नमोऽन्तादिषु फलभेदात् ॥ ४४,४५- ॥

अथ महात्रिपुरसुन्दर्या नव विशेषणानि, मन्त्रशेषनवाक्षरीं चोद्धरति सार्धैः त्रिभिः—

महामहेश्वरि महामहाराज्ञिमहामहा ॥ ४६ ॥
शक्ते महामहागुप्ते ततश्चापि महामहा ।

ज्ञप्ते महामहानन्दे ततः स्कन्धे महामहा । ४७ ।

स्पन्दे महामहाशब्दादाशये परिकीर्तयेत् ।
ततो महामहाशब्दः श्रीचक्रनगरात् पुनः ॥ ४८ ॥

सम्राज्ञिपदमुच्चार्य नमस्ते त्रिःपदं वदेत् ।
अग्निजायां विलोमेन त्रितारीमपि कीर्तयेत् ॥ ४९ ॥

**महामहेति ।** अत्र 'गुप्ते' इति टावन्तस्य संबुद्धिः । न त्विदन्तस्य । 'आशये' इत्यस्य पदस्य प्रथमाक्षरस्य महापदे संधित एव सिद्धावपि पृथगुद्धारः शयपदस्य हस्तवाचकस्य मन्त्रावयवत्वभ्रमनिरासाय । 'सम्राज्ञि' इति नान्तादेव ङीप्, न तु क्विबन्तात् राजशब्दात् । तेन समो मकारस्य श्रवणं छान्दसम् । **त्रिःपदं,** त्रिरिति पदम् । न पुनः 'नमस्ते' इति पदस्य त्रिरावृत्तिरिति भ्रमितव्यम् । **अग्निजायां;** स्वाहाशब्दम्, **त्रितारीं विलोमेन** रमामायावाग्भवानीति मन्त्रादिस्थक्रमाद् विलोमेन । स्पष्टमन्यत् ॥ - ४६ - ४९ ॥

एषा विद्या महासिद्धिदायिनी स्मृतिमात्रतः ॥ ४९-॥

**एषेति ।** अत्र स्मृतिः अर्थस्यैव । शब्दस्योच्चारार्थत्वात् । शब्दार्थयोः अभेदनतेनैकतरग्रहणेऽप्यन्यतरोपस्थितेः अविरोधाच्च । तेन मन्त्रार्णज्ञानपूर्वकं मन्त्रं जपेदिति ध्वनितम् । उक्तं च वरिवस्यारहस्ये—

“ नार्थज्ञानविहीनं
  शब्दस्योच्चारणं फलति ।
भस्मनि वह्निविहीने
  न प्रक्षिप्तं हविर्ज्वलति ॥” (२ - १)*

इति । अत्राप्युच्चारमन्त्रस्वरूपज्ञानविषयत्वमर्थस्य वर्णस्वरूपेयत्तादीनां चेत्यवधेयम् । यतः ;

“ एवमवस्थाशून्ये
  विषुवच्चक्राणि पञ्च षट् सप्त ।
नव च मनोरर्थांश्च
  स्मरतोऽर्णोच्चारणं तु जपः ॥”* (१ - ५२)

इत्यवधारितम् ॥ ४९ - ॥

---

* नार्थज्ञानमित्यादि । अर्थज्ञानविहीनं शब्दस्योच्चारणं न फलति । वह्निविहीने भस्मनि प्रक्षिप्तं हुतं हविः आज्यादिकं न ज्वलति । भस्मनि होमवत् अर्थज्ञानविरहितस्य जपो व्यर्थ इत्यभिप्रायः ।

* एवमिति । एवम् ; उक्तप्रकारेण । अवस्थाः पञ्च ; शून्यानि षट् ; विषुवन्ति सप्त ; चक्राणि नव इति यथाक्रममन्वयः । अर्थांश्च ; द्वितीयांशे वक्ष्यमाणान् अर्थांश्च स्मरन् ; मनोः, मन्त्रस्य ; उच्चारणम्, मन्त्राक्षराणाम् उच्चारणम् । जपः भवति ! नान्यथेति भावः । अर्णोच्चारणं

अथैनां विद्यामनेकैः फलैः स्तौति—

अग्निवातमहाक्षोभे राजा राष्ट्रस्य विप्लवे ॥ ५० ॥

लुण्ठने तस्करभये संग्रामे सलिलप्लवे ।
समुद्रयानविक्षोभे भूतप्रेतादिजे भये ॥ ५१ ॥

अपस्मारज्वरव्याधिमृत्युक्षामादिजे भये ।
शाकिनीपूतनायक्षरक्षःकूश्माण्डजे भये ।
मित्रभेदे ग्रहभये व्यसने चाभिचारिके ॥ ५२ ॥

अन्येष्वपि च दोषेषु मालामन्त्रं पठेन्नरः ।
सर्वोपद्रवनिर्मुक्तः साक्षाच्छिवमयो भवेत् ॥ ५३ ॥

अग्नीति । लुण्ठनम् ; स्वप्रत्यक्षमेव सर्वग्रहणं दस्युकृतम् । परोक्षे तद्धरणं तस्करकृतम् । शाकिन्यादयो ग्रहभेदाः, तज्जं

---

नाम अष्टपञ्चाशदक्षराणां मध्ये प्रथमद्वितीयकूटान्तर्गतबिन्द्वादिनवकद्वय-प्रहाणेन अवशिष्टानां चत्वारिंशदक्षराणाम् उच्चारणं जपपदवाच्यमित्य-भिप्रायः । तयोः पृथगुच्चारणकालाभावाद् द्वितीयतृतीयकूटोच्चारणेनैव तत्सिद्धिरिति विवेकः । चक्रभावनं तु सकलनिष्कलसकलनिष्कलात्मना त्रिविधत्वेन योगिनीहृदये चक्रसंकेते प्रतिपादितम् । तदत्राप्यनु-संधेयमेव । तत्प्रकारस्तु तत्रैव द्रष्टव्यः ।

भयम् ; ज्वररोगग्रहाद्युपद्रवभयमित्यर्थः । आभिचारिकव्यसनम्, शत्रुकृतमारणकर्मजन्यं दुःखम् । राष्ट्रव्याप्ततायाः एवंविधोपद्रवबाहुल्ये राजा पठेत्; पाठयेत् ऋतुविधिना ऋत्विग्भिः प्रत्येकतोऽप्यार्तजनस्यायं विधिः । सर्वोपद्रवविरहोऽपि भक्त्या पठन् निष्कामः साक्षात् शिवतामप्येति इत्यस्य मालमन्त्रस्य महिमानुवर्णनं बोध्यम् ॥ - ५० - ५३ ॥

आपत्काले नित्यपूजां विस्तरात् कर्तुमक्षमः ।
एकावर्तनमात्रेण पर्वपूजाफलं लभेत् ॥ ५४ ॥

आपदिति । आपत्; कारागृहनियन्त्रणादिरूपः ॥ ५४ ॥

एकत्रिंशत् सहस्रार्णास्त्रिलोकीमोहनक्षमः ।
मालामन्त्रो महाभाग्यलभ्यो झडिति सिद्धिकृत् ॥५५॥

सर्वसंकल्पसंसिद्धिरेतज्ज्ञात्वा नरो भवेत् ।

एकत्रिंशदिति । एकत्रिंशदुत्तराः सहस्रार्णाः यस्मिन्निति मध्यमपदलोपी समासः । सर्वसंकल्पसंद्धिरिति ; सर्वेषां संकल्पानां मनोरथविषयभूतानां संसिद्धिः यस्मात् स मन्त्रो यस्येति मध्यमावयवगर्भो विग्रहः ॥ ५५ - ॥

नवावरणदेवीनां ललिताया महौजसः ॥ ५६ ॥

एकत्र गणनारूपो वेदवेदान्तगोचरः ।
सर्वागमरहस्यार्थः स्मरणात् पापनाशिनी ॥ ५७ ॥

ललिताया महेशान्या मालाविद्या महीयसी ।

नवावरणेति । त्रिपुरसुन्दरीति प्राथमिकपदेन महानित्येति नित्यानां षोडशेन पदेन, महाश्रीसुन्दरीति पदेन, श्रीश्रीमहाभट्टारिकेत्यादिपदत्रयेण, महात्रिपुरसुन्दरीत्यादिपददशकेन च मिलित्वा षोडशाभिः पदैः ललिताया एव कथनम् । अन्यैः आवरणदेवतानां कथनं पञ्चषष्ट्युत्तरशतनामभिरिति विवेकः । सर्वं संभूयैकाशीत्युत्तरशतनाम्नामेकत्र ग्रथनरूपोऽयं मालामन्त्रः । वेदानां, कर्मकाण्डस्य, वेदान्तानां, ज्ञानकाण्डस्य च, गोचरः, विषयः । सर्वागमानाम् उपासनाकाण्डस्य रहस्यरूपोऽर्थो विषयः । अत एव स्मरणात् पापनाशिनीत्युक्तम् । मालाविद्याविशेष्यानुगमात् स्त्रीलिङ्गनिर्देशः ॥ - ५६ - ५७ - ॥

काण्डत्रयफलदातृत्वमेव विवृणोति, पुरुषार्थचतुष्टयसंपदा—

नरवश्यं नरेन्द्राणां वश्यं नारीवशंकरम् ॥ ५८ ॥

आणिमादिगुणैश्वर्यं रञ्जनं पापभञ्जनम् ।
तत्तदावरणस्थायि देवतावृन्दमन्त्रजम् ॥ ५९ ॥

मालामन्त्रं परं गुह्यं परंधामप्रकाशकम् ।
तस्माद् गोप्यतराद् गोप्यं रहस्यं भुक्तिमुक्तिदम् ॥६०॥

नरवश्यमिति । अणिमादयः अष्टौ गुणा एव ऐश्वर्यम्, ईश्वरप्रसादलभ्यो धर्मः । सर्वपापोत्तरणपूर्वक इत्येतत् पदद्वयेन धर्मपुरुषार्थसंग्रहः । नरवश्यं नरेन्द्राणामित्यर्थसंग्रहः । नारीवशंकरमिति तृतीयस्य । परंधामप्रकाशकमिति चरमरुपार्थस्येति विवेकः । तस्माद् गोप्यतराद् गोप्यमिति पूर्वोत्तरार्धयोः कारणकार्यभावः श्रीचरणप्रबोधमात्रगम्यः ॥ ५९, ६० ॥

चतुर्दशानामन्यासां मालानामित उद्भवः ।
द्वितीयान्ताश्चतुर्थ्यन्ताः संबुद्ध्यन्तास्त्रिषड्रसाः ॥ ६१ ॥

चतुर्दशेति । इतः, प्रकृतिरूपसंबुद्ध्यन्तमालातः, पञ्चदशसु मालासु प्रतिपञ्चकमेकैकेति तिस्रो द्वितीयान्ताः । द्वंद्वशः चतुर्थ्यन्ता इति, नमोऽन्तास्तिस्रः, स्वाहान्तास्तिस्रश्चेति षट्, द्वंद्वशः द्वितीयान्ताः इत्यपि शुद्धा, जयान्ताश्च रसाः षडेताः ॥ ६१ ॥

शक्तिमाला पञ्चधा स्याच्छिवमाला च तादृशी ।
द्वंद्वमाला च तादृक् स्यादेवं पञ्चदश क्रमात् ॥ ६२ ॥

पञ्च पञ्च पुनः पञ्च स्त्रीपुंसमिथनात्मिकाः ।
त्रिगुणाः कल्पतरवो नित्यापञ्चदशात्मिकाः ॥ ६३ ॥

तासु तु प्रकृतिस्त्र्यैकत्रिंशदर्णसहस्रयुक् ।

शक्तीति । पञ्चेति । पञ्चकत्रयं प्रत्येकं काङ्क्षितार्थप्रदत्वात् कल्पद्रुमरूपम् । स्वर्गेऽपि पञ्चैव मन्दारपारिजातसंतानहरिचन्दनकल्पवृक्षाः । एतास्तु त्रिगुणाः, शक्तिशिवमिथुनरूपेण पञ्चदश, नित्यापञ्चदशात्मिकाः, कामेश्वर्यादिचित्रान्तनित्यापञ्चदशसमानरूपाः । एते मालामन्त्राः प्रतिपदादिपूर्णिमान्ततत्तत्तिथिषु जप्ताश्चेत् तत्समष्टिभूतश्रीमहात्रिपुरसुन्दरीमहानित्यास्वरूपतारूपलाभमेव कुर्वन्तीत्यर्थः ॥६२,६३-॥

अथ चतुर्दशविकृतीनां प्रत्येकमक्षरसंख्याज्ञानायानुगमकं सुगममुपायमाह सार्धेन—

नामभिः पञ्चवार्णानि गुणयित्वात्र योजयेत् ॥ -६४ ॥

नामाक्षराणि नित्याश्च विभक्तेरक्षराणि च ।
संधीन् वियोज्य विकृतेर्वर्णसंख्यां विनिर्दिशेत् ॥ ६५ ॥

नामभिरिति । नामभिः; त्रिपुरसुन्दरीत्यादि सम्राज्ञीत्यन्तैः एकाशीत्यधिकशतसंख्याकैः प्रातिपदिकैः तत्संख्ययेति यावत् । पल्लवार्णानि; (१) नमः पादुकां पूजयामि (२) 'स्वाहा' (३) 'तर्पयामि' (४) 'जय जय' इति पल्लवानि, तेषामक्षराणि, नव द्वे चत्वारि चेति संख्याकानि । गुणयित्वा; अत्र गुणितसंख्यारूपपिण्डे नामाक्षराणि, एकाशीत्युत्तरशतनामगताक्षराणि षोडशोत्तरसहस्राणीति तत्संख्यां, नित्याश्च पञ्चदशसंख्यां च योजयेत् । प्रकृतिमालामन्त्रादिमान्यक्षराणि (ऐं ह्रीं श्रीं ओं नम इति) षडक्षराणि, तदन्तिमानि, (नमस्ते त्रिःस्वाहा श्रीं ह्रीं ऐं इति) नवाक्षराणि च मिलित्वा नित्याशब्दिताः पञ्चदशोक्तपिण्डे मेलयेदित्यर्थः ॥

यद्यपि, प्रकृतिमन्त्राक्षराणि 'योजयेत्' इत्येकोक्त्यैव तत्सर्वं सिद्ध्यति, तथापि मिथुनमन्त्रेषु नामाक्षराणां द्विर्निर्देशः । पञ्चदशाक्षराणां तु सकृदेवेति विशेषध्वननाय पार्थक्येन निर्देशः । विभक्तेः; चतुर्थ्या, द्वितीयाया वा, ततः स्त्रीलिङ्गनामसु नित्यक्लिन्नादिकेषु टाबन्तादिपदेषु प्रकृतितोऽक्षराधिक्यम् । यथा— 'नित्याक्लिन्नायै' इत्यादि । तानि चाष्टत्रिंशदेव । पुंलिङ्गनामसु तु 'त्रिपुरसुन्दराय' इत्यादिरीत्या षड्विंशत्युत्तरशत (१२६) नामस्वक्षराधिक्यम् । द्वितीयासु, 'सुन्दरीम्, सुन्दरम्' इत्यादौ

प्रकृतिसमानमन्त्राक्षरत्वेऽपि, 'त्रिपुराश्रियम्' इत्यत्रैवाक्षरी वर्धते इति विशेषः ।

संधीनिति । प्रकृतिमन्त्रे तावत्, अस्त्रदेव्यात् अतिरहस्य-योगिन्यन्तानि नामानि विंशतिः । तेष्वेकाराभिन्नादिमाक्षरवतां ('नेत्रदेव्यस्त्रदेवि' इत्यादिषु) पूर्वनामक्षरेण सह संधौ यणा-देशः । पूर्वरूपाव्यतिरेकैणैकाक्षरलोपस्य प्रकृतावपि सत्त्वात् प्रकृतितो विकृतिषु न विशेषः । इच्छासिद्धीशित्वसिद्ध्यो-राद्ययोस्तु प्रकृतौ लोपाभावात् विकृतिषु, 'पूजयामि' 'स्वाहा' इत्यादिपल्लवाक्षरतः पाठे सवर्णदीर्घगुणाभ्यां लोपावश्यंभावाद् द्वयोरुक्तसंख्यापिण्डाद् वियोजनं कार्यम् । ऊरीकृतार्थेन संधी-निति बहुवचनमनन्वितम् । मिथुनमन्त्रेषु तयोः द्विवारलोपेन तदुपपत्तेः ॥

अथ वा, संबुद्धिशब्दस्य मध्यमाक्षरपरित्यागेन नामैकदेश-रीत्यापि ग्रहणम् । संबुद्धयश्च संधी चेति विग्रहेषु "पुमांस्त्रिया" इत्येकशेषे संधीनिनि पदम् । तेन पुंलिङ्गसंबुद्धौ पञ्चाश(५०) दर्णलोपसंभवः । न तु संध्यक्षरद्वयलोपः; प्रकृतिवदेवास्थानात् । उदाहरणम्—यथा नमोऽन्तशक्तिमन्त्रस्य, 'नमः पादुकां पूजयामि' इति पल्लवार्णानां नवानां नामसंख्यया एकाशीत्यु-त्तरशतेन (१८१) गुणने एकसहस्रं षट्शतान्येकोनत्रिंशच्च

(१६२९) भवन्ति । तत्र नामाक्षराणां षोडशाधिकसहस्रसंख्या-कानां (१०१६) पञ्चदश (१५) संख्यायाश्च स्त्रीलिङ्गटाबन्तादि-चतुर्थीविभक्तिप्रयुक्तानां यैकाररूपाक्षराणाम् अष्टत्रिंशतश्च(३८) योजनेन संधिप्रयुक्ताक्षरद्वयस्योनीकरणाच्च द्वे सहस्रे षट्शतोत्तर-षण्णवतिश्च (२६९६) अक्षराणि भवन्ति ।

यथा वा—जयान्तशिवमन्त्रस्य पल्लवार्णानां, 'जय जय' इति चतुर्णां नामसंख्यया गुणने सप्त शतानि चतुर्विंशतिश्च (७२४)। तत्र नामाक्षराणां (१०१६) नित्यासंख्यायाश्च (१५) योजनेनैकसहस्रं सप्त शतानि पञ्चपञ्चाशच्च (१७५५) भवति । तत्र पुंलिङ्गे इन्नन्तभगमालिनादिपदसंबुद्धिप्रयुक्तस्य पञ्चाशतः संध्यक्षरद्वयस्य च लोपे सति त्र्युत्तरसप्तदशशती (१७०३)। *

* अत्र जायन्ःशिवमालायां (९०, ९१) नवत्येकनवतितमनाम्नोः मध्ये पल्लवयोजनेन, 'गुप्तयोगिन्' 'जय जया-नङ्गकुसुम', इत्यत्र द्वे अक्षरे, एवमेव (९६,९७) षण्णवतिसप्तनवतितमनाम्नोर्मध्ये पल्लवयोगेन, 'अनङ्ग-वेगिन्' 'जय जयाङ्कुशे 'न' इत्यत्र द्वे अक्षरे। तथैव, (१५३,१५४) त्रिपञ्चाशदुत्तरशतचतुःपञ्चाशदुत्तरशतमनाम्नोर्मध्ये, 'पाशिन्' जय जया-ङ्कुशिन् जय जय इत्यत्र द्वे (१५९-१६०)एकोनषष्ट्युत्तरशतषष्ट्युत्तरशत-तमनाम्नोर्मध्ये पल्लवयोजनेन, 'सर्वसिद्धिप्रदचक्रस्वामिन्' 'जय जया' 'तिरहस्ययोगिनि' इत्यत्र द्वे चेति संभूयाष्टावक्षराणि लुप्यमानानि लभ्यन्ते।

यथा च—स्वाहान्तमिथुनमन्त्रे पल्लवार्णद्वयस्य पुंनामस्त्रीनाम-द्वयगुणनेन (३६२×२=७२४) नामाक्षराणां (१०१६×२=२०३२) द्विवारयोजनेन च, पञ्चदश (१५) नित्यासंख्या-योजनेन च द्वे सहस्रे सप्त शतान्येकसप्ततिश्च (२७७१) भवति। तत्र स्त्रीलिङ्गचतुर्थीप्रयुक्तवर्णानामष्टत्रिंशतः, (३८) पुंलिङ्गचतुर्थी-वर्णानां षड्विंशत्युत्तरशतस्य (१२६) च योगेन; तस्मात् संख्या-क्षरयोः द्विवारं (४) लोपेन च एकोनत्रिंशच्छतान्येकत्रिंशदधि-

---

तेषु प्रकृतिप्रतिपन्नचतुरक्षराणि विहाय शिष्टानां चतुर्णामक्षराणां लोपावश्यंभावेन, उक्तसंध्यक्षरद्वयेन साकम् एतच्चतुरक्षराण्यपि पिण्डसंख्याया-मूनीकर्तव्यानि भवन्ति। तथा च—जयान्तशिवमाला स्वेकोनसप्तशतार्णा (१६९९) इत्येव लभ्यते। परं तु एतमूनीकरणे मूलग्रन्थे वा व्याख्याग्रन्थे वा नोपलभ्यते। तदूनीकरणे तु शिवोक्तं सर्वमालाक्षरपिण्डसंख्या विरुध्यते, तदनुरोधेन—

'त्रिपञ्चकस्रजां पिण्डमाद्यन्तशानपूर्वकम्।
कुर्वन्नवनवात्मानं नित्योपास्तिपरोऽप्यथ॥'

इत्येतच्छ्लोकव्याख्या सर्वापि विप्लुतार्था भविष्यति।

अतः अत्रोपपत्तिरेवमवश्यं भवितव्येत्युत्पश्यामः। "फणिभावित-भाष्यफक्किकारचनाकुण्डलानामवाप्ह" (!) इतिवत्, 'अत्र जयान्तशिव-मालायाप्यधिकतरसंध्यक्षरचतुष्टयस्थले विसंधय एव ग्राह्या' इति प्रति-पादकमूलश्लोकार्थेन, लेखकप्रमादपरंपरया वा, जीर्ण[illegible]पत्रलोपाद्वा नष्टेन भवितव्यमिति॥

कानि (२९३१) वर्णानि भवन्ति । एवमन्यासामपि संख्यो-न्नयनं कार्यम् ॥ ६५ ॥

अथ भक्तानुग्रहाय प्रत्येकं संख्यामुपदिशति—

सर्वतोऽभ्यधिकात्यष्टिः सर्वतोऽल्पतरः शिशुः ।
पड्विंशतिशतीसंख्या पण्णवत्यधिकोष्णिहि ॥ ६६ ॥

सर्वत इति । द्वादश मिथुनदैवत्यनमोऽन्तमालामन्त्रो हि अत्यष्टिश्छन्दस्कः । तस्यां पञ्च सहस्राणि चत्वारि शतानि पञ्च षष्टिश्च अक्षराणि (५४६५) वक्ष्यन्ते । ततोऽधिकाक्षरः समसंख्याक्षरो वान्यो मालामन्त्रो नास्ति ॥

शिवदैवत्यशुद्धमालामन्त्रस्याक्षराणि, नव शतान्येकाशीतिश्च (९८१) तत्समानोऽल्पतरो वान्यो मालामन्त्रो नास्ति । शिशुशब्देन 'शिव', 'शुद्ध' पदाद्यक्षरग्रहणेन नामैकदेशन्यायेनाल्पतरत्वयोग्यतार्थोऽयं कार्यान्तरलिप्सया निर्देशः ।

शक्तिदैवत्यनमोऽन्तमालामन्त्रः उष्णिक्छन्दस्कः; तत्र टाबन्तङीबन्तपदानां चतुर्थ्यन्तरूपं निर्विवादम् । सिद्धि-योनि-शक्ति-ज्ञप्तिपदानामपि ङीबन्तवदेव रूपाणि । न तु 'सिद्धय' इत्यादीनि पुंलिङ्गतुल्यानि । तेनात्र द्वे सहस्रे षट्शतानि षण्णवतिश्चाक्षराणि (२६९६) भवन्ति ॥ ६६ ॥

एकोनत्रिंशता संख्यानुष्टुभी गोत्रभिच्छती ।
सरस्वतीविवस्वन्तावष्टाशीत्यधिके इमे ॥ ६७ ॥

एकोनेति । एकोनत्रिंशतेति सहार्थे तृतीया । गोत्रभिदः; चतुर्दश । आनुष्टुभी; स्वाहान्तशक्तिमाला । तस्यामेकं सहस्रम्, चत्वारि शतानि एकोनत्रिंशच्च (१४२९) अक्षराणी-त्यर्थः । चतुर्थीयोजनं नमोऽन्तवत् । इमे; अनुवादाः, पूर्वोक्ते उष्णिगनुष्टुभौ (२६९६) नमोऽन्तस्वाहान्त (१४२९) शक्ति-माले । एतयोः प्रत्येकम् अष्टाशीत्या (८८) योज्यते चेत्, सारस्वतीदैवत्यमाला, विवस्वदादित्यमालायाश्च क्रमेणाक्षर-संख्ये भवतः । द्वे सहस्रे सप्त शतानि चतुरशीतिश्च (२७८४) नमोऽन्तशिवमालाया अक्षराणि । सहस्रं पञ्च शतानि सप्तदश चेति (१५१७) स्वाहान्तशिवमालाया अक्षराणि च भवन्तीति यावत् ।

अनयोः मन्त्रयोः शब्देष्वदन्तात्।टाबन्ताः, ङीबन्ताश्च ये ये शब्दास्तेषां ह्रस्वाकारान्तस्यैव रूपम् । 'भेरुण्डाय' 'सुन्दराय' इत्यादि । नान्तङीबन्तानां तु भगमालिनेत्यादि, इन्नन्तानां सिद्ध इत्यादि । महालक्ष्म्या वातप्रमीवत् महालक्ष्म्यै इति । त्रिपुराश्रियः श्रिये इति । 'सम्राज्ञी' इत्यस्य 'सम्राजाय', न तु सम्राजे

इति, प्रकृतौ क्विन्तराजतेरभावात्। राजनि परे समो मस्य मकारः, प्रकृताविहापि च्छान्दस एव। इहास्याजन्तत्वेऽपि नान्तशब्दविकारतानपायादिति द्रष्टव्यम् ॥ ६७ ॥

अब्धीष्वश्वेन्दुसंख्याकवर्णावर्यमपूषणौ ।
श्रोत्रवागिन्द्रिये न्यूने क्रमान्मातृकयेन्दुना ॥ ६८ ॥

अब्धीष्विति। अब्धयः, चत्वारः; इषवः, पञ्च; अश्वाः, सप्त; इन्दुः, एकः; अङ्कानां वामतः संख्याविन्यासः, वृद्धिश्च। तेन, एकं सहस्रं सप्त शतानि चतुष्पञ्चाशत् (१७५४) तर्पणान्तशक्तिशिवमालयोः प्रत्येकमक्षराणि भवन्ति। तयोः आद्यस्य अर्यमादित्य ऋषिः; अन्त्यस्य पूषादित्य ऋषिरिति तत्पदाभ्यां तयोः व्यपदेशः। अत्र प्रकृतिः (१०३१) एकत्रिंशत्सहस्रार्णा; पल्लवाक्षराणि चतुर्विंशत्यधिकसप्तदशानि(७२४), द्वितीयान्ततायुक्तत्रिपुराश्रियमित्यत्रैकम्, संहृत्य षट्पञ्चाशदधिकसप्तदश शतानि (१७५६) सिद्धप्रयुक्तेच्छेशित्वयोराद्यक्षरद्वयं न्यूनं भवतीति विवेकः (१७५४) ॥

अस्यामेव संख्यायां मातृकया एकपञ्चाशता न्यूनतायां श्रोत्रेन्द्रियाधिष्ठातृपिकजयान्तशिवमालामन्त्रगताक्षरसंख्या भवति (१७०३)। इन्दुना एकेनैव न्यूनतायां तु वागिन्द्रियाधि-

ष्ठाय्यृषिकजयान्तशक्तिमालामन्त्राक्षरसंख्या भवति (१७५३)। सप्तदश शतानि त्र्यधिकानि (१७०३) जयान्तशिवमन्त्रस्य। तावन्त्येव शतानि त्रिपञ्चाशताधिकान्यक्षराणि (१७५३) द्वितीयस्य वागिन्द्रियाधिष्ठाय्यृषिकजयान्तशक्तिमालामन्त्रस्य च भवन्तीति विवेकः।

अत्र प्रकृतितः (१०३१) पल्लवाक्षराणामुक्तसंख्या (७२४)। नामभिर्वृद्धिरुभयत्र समैव। 'तर्पयामि' इत्यस्य जयद्वयस्य च चतुरक्षरत्वाविशेषात्। द्वितीयान्तताप्रयुक्तं श्रियमित्यत्रत्य-मेकमेवाक्षरमेकत्रोनीयते। अन्यत्र तु तदक्षरेण सह पुंलिङ्ग-संबुद्धिप्रयुक्तपञ्चाशदक्षराण्यपि प्रकृतितः ऊनीयन्त इत्युप-पत्तिः॥ ६८॥

हलिकः शिव एकोनविंशत्यूनः सहस्रकः।
स एव त्रिगुणः पञ्चत्रिंशता हृदयेश्वरः॥ ६९॥

हलिक इति। हलिको नामा शिवदैवत्यः शुद्धमालामन्त्रः स्त्रीलिङ्गप्रकृतितः पुंलिङ्गसंबुद्धिप्रयुक्तपञ्चाशदक्षरोनतयैकाशीत्युत्तर-नवशताक्षरकः (९८१)।

हृदयेश्वरशिवदैवत्यः, शुद्धमिथुनमालामन्त्रस्तु, स्त्रीपुंस-समष्टिरूपत्वात् द्विगुणाक्षरः पञ्चत्रिंशताधिक्येन सहितो (१९७७)

भवति। तत्रोपपत्तिः—शुद्धशक्तिमन्त्ररूपा प्रकृतिः एकत्रिंश-दुत्तरसहस्रा (१०३१)। शुद्धशिवमन्त्रः एकाशीत्युत्तरनवशती (९८१)। अनयोर्योगे द्वादशोत्तरविंशतिशतं संपद्यते। (२०१२)। तत्र संपुटाक्षरपञ्चदशकस्य नित्यासंख्याः सकृदेव योजनीयतया तदंशे वैगुण्यतायाः न्यूनतायाम् एकं सहस्रं नव शतानि सप्तनवतिश्च (१९९७) भवति ॥ ६९ ॥

**त्रिगुणश्चेद् रविन्यूनः स एव करुणाकरः।**
**सरस्वती द्वयी त्र्यूना शतोना सर्वतोऽधिका ॥ ७० ॥**

त्रिगुण इति। स एव, ; शुद्धशिवमन्त्र एव। तदक्षर-संख्यैवेति यावत्। त्रिगुणः चेत् सन् ; रवयः ; द्वादश (१२), तैः न्यूनश्चेद् द्वे सहस्रे नवशतानि एकत्रिंशच्चाक्षराणि (२९३१) करुणाकराख्यशिवदैवत्यस्य स्वाहान्तमिथुनमन्त्रस्य भवन्ती-त्यर्थः। अत्रोपपत्तिः[1] पूर्वमेवोदाहृता।

सरस्वती ; नमोऽन्तपुंलिङ्गमन्त्राक्षरसंख्या (२७८४) पूर्व-मुक्ता। तां द्विगुणीकृत्य त्र्युत्तरशतमपनयेत्, पञ्चसाहस्री चतुः-शती पञ्चषष्टिश्च संख्या संपद्यन्ते (५४६५)। तावन्त्यक्ष-राणि सर्वाधिकाया मिथुननमोऽन्तमालाया भवन्ति। शक्ति-

1. तत्रोपपत्तिः T.

नमोऽन्तशिवनमोऽन्तयोर्योगे संपुटाक्षरपञ्चदशकस्य सकृद-पनयेन तावतामेव (५४६५) सिद्धिः ॥ ७० ॥

लावण्यनायकोऽध्युष्टसाहस्रीतुरगोनिते ।
हिरण्यबाहुः सैव स्याच्चेद् द्विपञ्चाशदूनिता ॥ ७१ ॥

लवण्येति । अध्युष्टम्; सार्धत्रयम् । तुरगाः सप्त, तैः ऊनिताः अध्युष्टसाहस्रसार्धसहस्रत्रयम्; एवं च त्रीणि सहस्राणि त्रिनवत्युत्तरचतुःशताधिकानि (३४९३)। लावण्यनायकः; तन्नामकशिवदैवत्यः तर्पणान्तमिथुनमन्त्रः। शिवशक्त्यन्यतर-तर्पणमन्त्रद्विगुणसंख्यायां पञ्चदशसंख्यापनयेन तदुपपत्तिः ॥

सैव पूर्वोक्ततुरगोनिताध्युष्टसाहस्रात्मिका संख्यैव (३४९३) द्विपञ्चाशता (५२) अपचिता चेत्, हिरण्यबाहुदैवत्यजयान्त-मिथुनमालायाः त्रीणि सहस्राणि चतुःशतानि एकचत्वारिंशच्च अक्षराणि (३४४१) भवन्ति। शिवशक्तिजययोर्योगे पञ्चदशा-पनयेन च तत्सिद्धिः ॥ ७१ ॥

एता मालावर्णसंख्या पार्थक्येन मयोदिताः ।
संहृत्य निधिदस्राश्ववेदपावकसंमितः ॥ ८२ ॥

एता इति । संहृत्य पञ्चदशानां मालानां प्रातिस्विकसंख्यां संहृत्य संघातीकृत्य एकराशीकृत्य, निर्णीता इति शेषः ।

निधयः, नव, दस्रौ, द्वौ; अश्वाः, सप्त, वेदाः, चत्वारः, पावकाः, त्रयः, एतैः चतुस्त्रिंशत् सहस्राणि सप्त शतानि एकोनत्रिंशच्च सर्वमालासंपन्नसंख्यानां मेलनाद् अक्षराणां महासंख्या (३४७२९) भवति, इयं नित्यजपाभिप्रायेण। काम्यजपाभिप्रायेण तु, शरनागाश्ववेदपावकरूपो[1] (३४७८५) वक्ष्यतेऽस्माभिः ॥ ७२ ॥

वर्णराशिमिमं ज्ञात्वा वर्णराशिः स्वयं भवेत्।
तत्तत्संख्यापरिज्ञानात् सा सा नित्या प्रसीदति ॥ ७३ ॥

वर्णेति। वर्णराशिम्, समुदितसंख्यापिण्डम्। इमम्; सांप्रतमेव कथितम्। वर्णराशिः, साक्षान्मातृकारूपः। स्वयम्, साधकः। एतत् संख्यापरिज्ञानं, शब्दब्रह्मतादात्म्यापादकज्ञानम्। "यावद् ब्रह्म विनिष्ठितं तावती वाक्" इति श्रुत्या तस्यापि महाफलत्वादिति भावः।

एतासां मालानां कादिविद्यावर्णेभ्यः पञ्चदशेभ्यः क्रमादुत्पन्नत्वात् तत्तत्संख्याज्ञानेन तत्तद्वर्णाभिमानिकामेश्वर्यादिचित्रान्तनित्यानां मध्ये तत्तत्प्रसादो भवतीत्याह—तत्तदिति ॥ ७२ ॥

1. शराः पञ्च, नागा अष्टौ, अश्वाः सप्त, वेदाः चत्वारः पावकाः, त्रयः।

त्रिपञ्चकस्रजां पिण्डमाद्यन्तज्ञानपूर्वकम् ।
कुर्वन् नवनवात्मानं नित्योपास्तिपरो यथा[1] ॥ ७४ ॥

यो नित्यं दृढभक्त्येदं मालामन्त्रमुपासते ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रस्तदितरोऽथ यः[2] ॥ ७५ ॥

महात्रिपुरसुन्दर्याः परं रूपं स विन्दते ।

त्रिपञ्चेति । शक्तिशिवमिथुनभेदेन पञ्चकत्रयात्मकानां त्रिपञ्चकमालानां पिण्डं समूहम्, आद्यन्तं; आङ्ि प्रश्लेषेण आद्यमालामन्त्रात् अन्त्यमालामन्त्रम् अभिव्याप्य, ज्ञानपूर्वकम्; ज्ञानपुरःसरं यथा तथा सर्वासामपि ऋषिच्छन्दोदेवतविनियोगान्. ज्ञात्वा, नवनवात्मानम्; नित्यनूतनस्वरूपं कुर्वन् प्रीतिविषयं कुर्वन् "अनेकशः संस्तुतमप्यदोऽल्पं नवं नवं प्रीतिरहो करोति" इत्यभियुक्तोक्तेः । माहात्म्यज्ञानपूर्वकसुदृढभक्तिविषयी कुर्वन्निति यावत् । दृढभक्तः सन् यो नित्यं पञ्चदशमालापरः ब्राह्मणादिवर्णः, तदितरः, आम्बष्ठरजकादिः, संकीर्णो वा, सः देव्याः, परं रूपम्, ब्रह्म विन्दति प्राप्नोतीत्यर्थः । रहस्यज्ञानेन ब्रह्मविदेव सन् ब्रह्मैव भवतीति निष्कर्षः ॥ (१)

1. परोऽप्यथ T. 2. इतरोऽपि वा P.

यद्वा—रुद्रयामले रहस्याध्याये, श्रीविद्यादिमन्त्राक्षराणां प्रत्येकं नवाङ्करूपता स्वस्वगुरुमुखादवगन्तव्येत्युच्यते । तद्वदत्रत्याक्षराणां लेखे नवाङ्कसाम्यं देशिकमुखादवगम्योपासीतेत्यर्थः । एकपञ्चाशतां मातृकाक्षराणां मध्ये पिण्डाक्षराणि, चवर्गटवर्गयोश्चतुर्थेऽक्षरे पवर्गे द्वितीयं च विहायेतरेषु नवात्मतां जानीयादिति यावत् । आद्यन्ते विचार्यमाणे तावतामेवाक्षराणां तत्र नवत्वात् । तदेवाह—आद्यन्तेति । (२)

अन्यथा—सर्वत्र शतसंख्यासहस्रसंख्यादिरूपो वा जपो विधीयते । स सर्वोऽपि समष्टिरूप एक एव । ततः यदष्टोत्तरशतं विधीयते, तन्नवात्मकत्वार्थमेवेति स्पष्टमाकरे । तदिहापि पञ्चदशमाला जपित्वा पश्चात् अष्टोत्तरशतवारं पञ्चदशीं जपेदित्यर्थः । मालिनीविजयतन्त्रादौ—"आदिमान्त्यविहीनास्तु मन्त्राः स्युः शरदभ्रवत्" इत्यादिना आद्यन्तज्ञानं रहस्यत्वेन प्रतिपादितम् । सेतुबन्धादौ—यदस्माभिः प्रकटीकृतं तद्विवृते—आद्यन्तेति । (३)

यथा वा—नवात्मत्वं हि नवावयवकत्वमेव सर्वत्र संप्रतिपन्नम् । चक्रयोनिषु पुरश्चर्यायां देव्यामुपासकदेहे च नवात्मकतायाः सादृश्यादेव तत्र तत्र प्रतिपादनात् । तदिहापि मन्त्रसमूहाक्षरसंख्यायां नवावयवात्मत्वं दण्डकलितन्यायेन स्वस्थानविरुद्ध

वा संपाद्यम् । तच्चतुस्त्रिंशत्सहस्राणि सप्तशतान्यूनत्रिंशच्चे (३४७२९) त्येतदात्मकसंख्याया नवभिः विभजनेन भवितव्यम् । तदिह न संभवति । त्रीणि सहस्राण्यष्टौ शतान्यष्टपञ्चाशतो लाभेऽपि सप्तानामवशेषेण नवभिः भागायोगात्, अष्टोत्तरत्वार्थं जप्यमानायाः पञ्चदश्या विंशत्यधिकशताक्षराणां सप्तसु मेलनेन विभागेऽपि एकाक्षरस्यावशेषावश्यंभावात् । तस्मादष्टोत्तरत्वं षोडशीजपेनैव निर्वोढव्यम् । तथात्व एव संख्याया अवैषम्यात् ॥

तथा च त्रिसप्तत्यधिकाष्टशत्युत्तरत्रिसहस्रात्मक (३४८५७) । एको भाग इत्येवं नवात्मत्वं स्वस्थानविवृद्ध्या भवति । दण्डकलितन्यायेन तु, नवाक्षरात्मक, एकैको भागः तावत् संख्यया भवतीति, उभयथापि नवात्मकत्वमविशिष्टम् । आद्यन्तेति तु पूर्ववदेव । (४)

एवं वा—आदावन्ते च जपनीयायाः षोडश्या ज्ञानं तदक्षरसंख्याया अपि, मालाक्षरसंख्यामिश्रणज्ञानं तत्पूर्वकमित्यर्थोऽन्यथानुपपत्त्या वर्णनीयः । नवात्मकतायाः प्रकारान्तरेणोपपत्तौ अष्टोत्तरत्वविधेः कल्पकान्तराभावात् । षोडश्याः अष्टाविंशत्यक्षरात्मकत्वेन तद्द्विगुणसंख्याया अष्ट न्यूनत्वात् तदाश्रयणेन नवात्मकत्वासंभवादिति । (५) एवं पञ्चधा व्याख्याः ।

परमार्थतस्तु वयं ब्रूमः—पूर्वोक्तायां निधिदस्राश्ववेद-पावकसंमितायां (३४७२९) समुदितसङ्ख्यायां षट्पञ्चाशतो योजनेन नवात्मता भवतीत्यविवादम्। तावती च न षोडशीं द्विरावृत्य वर्धयितुं युज्यते। तादृशस्पष्टवचनाभावात्। अपि तु—मन्त्रेष्वेव वैकल्पिकानि तावन्त्यक्षराणि दृश्यन्ते।

तथा हि—सिद्धिपदानि दश, शक्तिपदे द्वे, योनिपदम्, ज्ञप्तिपदं चैककमिति चतुर्दशपदानां स्त्रीलिङ्गचतुर्थ्यन्तरूपाणि, 'सिद्ध्यै' इत्यादिद्व्यक्षराणीव, 'सिद्धये' इति त्र्यक्षर-रूपाण्यपि विकल्पेन साधूनि। पूर्वम् अक्षरगणनायां तु तत्त-न्मन्त्रेषु द्व्यक्षराण्येव गृहीतानि। तेष्वेव त्र्यक्षरपक्षे चतुर्दशा-क्षराणि वर्धन्ते। स्वाहान्तानां नमोऽन्तानां च, 'विभक्तिः सांप्रदानिकी' इति विधेः पक्षद्वयेऽप्यविशेषात्, शक्तिनमोऽन्त-स्वाहान्तौ मिथुननमोऽन्तस्वाहान्तौ चेति चतुर्ष्वेव मन्त्रेषु प्रातिस्विकं चतुर्दशानां विकल्पेनाभिवृद्धेः षट्पञ्चाशतः संपत्तिः। तदिदं प्रथमपञ्चके, तृतीयपञ्चके च मिलित्वा संभवति; न मध्यमपञ्चके, तत्तत्स्त्रीलिङ्गसिद्ध्यादिपदाभावेन विकल्पा-योगात्। तदेतद्द्योतनायैव, 'आद्यन्तज्ञानपूर्वकम्' इत्युक्तम्। पञ्चदशानामित्यनुक्त्वा पञ्चकत्रयत्वेन निर्देशस्वरसताप्यस्मिन्नेव पक्षे युज्यते। (६)

एवं–‘ नित्योपास्तिपरः ’ इति पदमपि पञ्चदशनित्यात्मकत्वेन भावनान्तरविधानपरम् , न पुना रहस्यतयानुवाद इति । ‘ अथ ’शब्दोऽपि नवात्मत्वपञ्चदशात्मत्वभावनाविकल्पपरः, अथ वेत्यर्थः । यथा—

“ तस्यां हतायां दुष्टायां सिंहे च विनिपातिते ।
शीघ्रमागम्यतां बध्वा गृहीत्वा तामथाम्बिकाम् ॥ ”

इति देवीमाहात्म्यश्लोके तथा व्याख्यानदर्शनात् । उक्तसंख्या नवभिरिव पञ्चदशाभिरपि विभागे द्वे सहस्रे त्रीणि शतान्येकोनविंशतिश्च (२३१९) इत्येतावत् संख्याक्षर एकैको भागो भवति । तेनेदृगन्यतरभावनापरश्चेत्, उक्तमालाचतुष्टये, ‘ सिद्धय ’ इत्याद्येव पठेत् । इतरे तु ‘ सिद्ध्यै ’ इत्यादिकमेव पठेयुरिति व्यवस्था संगच्छत[1] इति सर्वं समञ्जसम् ॥ ७४, ७५ ॥

य एता वर्णशोऽधीते सोऽधीते निखिला श्रुतिः ॥ ७६ ॥
सर्वाः श्रुतीः पुराणानि तन्त्राणि सकलान्यपि ।

य इति । वर्णशः; अक्षरसंख्याज्ञानपूर्वकम् ॥ ७६- ॥

1. सिद्ध्यतीति P.

श्रीविद्योपासको मालामन्त्रानेतान् न वेत्ति यः ॥ ७७ ॥
न तस्य फलदोपासा भस्मनीव हुताहुतिः ।

श्रीविद्येति । उपासा ; त्रिपुरसुन्दर्युपासना ॥ ७७- ॥

अथ निगमने त्वेतन्मालामन्त्रस्योपदेशपूर्वकसंप्रदायपरिपालनानिर्बन्धविधिमुपनिबध्नाति —

तस्मादवश्यं विज्ञेया एताः पञ्चदशस्रजः ॥ ७८ ॥
अप्रकाश्या अपि शिवे त्वत्प्रीत्यैव मयोदिताः ।

तस्मादिति । अवश्यम् ; अकरणे प्रत्यवायम् उपासकस्य पूर्वश्लोकोक्तं ध्वनयति—अप्रकाश्या अपीति ; अधिकारिणेऽपि भक्तिरहिताय त्वत्प्रीत्यैव त्वन्निष्ठां भक्तिं ज्ञात्वैव । मया इत्यनेन स्वस्य शिवस्यापि सत इत्यभिप्रायः । तदुपासकत्वे सत्यपि मालामन्त्रे भक्तिं ज्ञात्वैव त्वामुपदेष्टुं ममाप्यधिकार इति सूचितः । तेनान्योऽपि भक्तिं परीक्ष्यैवोपासकाय उपासको दद्यात् इत्युपदेशो ध्वनित इति सर्वं शिवम् ॥ ७८- ॥

अथ निगमयन्; पुनरेतन्मन्त्रप्रभावमनुस्मरति —

[मालामन्त्रैरमीभिस्तु मन्त्रिता भूतिपांसवः ।
क्षिप्ता भूताभिभूतानां मूर्ध्नि भूतविनाशकाः ॥

ज्वरिणां च ज्वरा यान्ति वाता वातकिनामपि ।
असाध्यरोगग्रस्तानां रोगा यान्ति द्रुतं क्षयम् ॥

एतन्मन्त्रिततोयेन भस्मना वा समुत्क्षणात् ।
पठित्वा हस्तस्पर्शाद्वा नात्र कार्या विचारणा ॥

सप्ताष्टमालामन्त्रैस्तु मन्त्रयित्वा घटोदकम् ।
सप्ताहं सेवनं कृत्वा वन्ध्या पुत्रवती भवेत् ॥

सप्ताष्टमालिका जापी नित्यं पुण्यमयाकृतिः ।
ज्वलन्नग्निरिव तस्त्रैर्वीक्ष्यते भूतपूतनैः ॥]

मालेति । स्पष्टोऽर्थः । एते पञ्च श्लोकाः अधिकाः सत्सं-प्रदायप्रवर्तकानामुपासकमहाशयानाम् आन्ध्रदेशेषु वर्तमानानां कोशेषु क्वचित् क्वचिदुपलभ्यन्ते ॥

इति सर्वतन्त्रोत्तमे श्रीललितारहस्य-
परिशिष्टतन्त्रे श्रीपार्वतीपरमेश्वर-
संवादे श्रीविद्या खड्गशी माला-
मन्त्रोद्धारकथनं नाम
द्वितीयः पटलः

—:*:—

श्रीगम्भीररायभारति-
तनुजनुषा भास्कराभिचिता ।
उन्नीतायामिह गुरु-
कलानामनि कृतौ समर्थायाम् ॥

श्रीविद्यामालामणि-
पिटककीलोद्धृतिविधौ लिपेः सम्यक् ।
व्यतनुत संख्योद्धारं
प्रीत्यै देव्याश्चरमस्य पटलस्य ॥

इति श्रीभास्करोन्नीते रहस्यपरिशिष्टके ।
ललितायाः स्रजोद्धारे चरमः पटलो गतः ॥

इति श्रीमत्पदवाक्यप्रमाणपरावारपारीणधुरीण-
निखिलतन्त्रस्वतन्त्रश्रीमद्गम्भीररायभारति-
तनुजनुषा श्रीमद्भासुरानन्दनाथदीक्षा-
नामजुषा श्रीमद्भास्कररायेणो-
न्नीतायां श्रीललितारहस्य-
परिशिष्टतन्त्रव्याख्यायां
गुरुकलाप्रकाशिकायां
द्वितीयः पटलः
संपूर्णः

—:o:—

5

श्रीमहागणपतये नमः

श्रीशिवाय गुरुवे नमः

श्रीललितामहात्रिपुरसुन्दर्यै नमः

# श्रीभासुरानन्दनाथप्रणीतश्रीविद्यामालामन्त्रोद्धार-व्याख्यानुसारी पारायणविधिः

ककारकामेश्वरीनित्याकशुक्लप्रतिपदमावास्याप्रयुक्ता-

## (१) शुद्धशक्ति(प्रकृति)माला (१०३१-वर्णाः)

एकत्रिंशत्सहस्रार्णाः शुद्धशक्तिरुगीरिताः

### (क)

अस्य श्रीशुद्धशक्तिमालामहामन्त्रस्य, उपस्थेन्द्रियाधिष्ठाय्य-रुणादित्यभैरवर्षये नमः शिरसि। गायत्रीच्छन्दसे नमः मुखे। सात्त्विककारभट्टारकपीठस्थितकामेश्वरनामकमहाकामेश्वरशिवाङ्क-निलयश्रीकामेश्वरीनामकमहाकामेश्वरी ललितामहात्रिपुरसुन्दरीपरा भट्टारिकाम्बायै देवतायै नमः हृदये। ऐं क ५ बीजाय नमः गुह्ये; सौः स ४ शक्त्यै नमः पादयोः; क्लीं ह ६ कीलकाय नमः नाभौ। मम श्रीकामेश्वरनामकमहाकामेश्वरशिवाङ्कनिलय-श्रीकामेश्वरीनामकमहाकामेश्वरीललितामहात्रिपुरसुन्दरीपराभट्टा-रिकाम्बाप्रसादेन खड्गसिद्ध्यवाप्त्यर्थे शुद्धशक्ति[illegible]

भगमालिनि नित्यक्लिन्ने भेरुण्डे वह्निवासिनि महावज्रेश्वरि शिवादूति त्वरिते कुलसुन्दरि नित्ये नीलपताके विजये सर्वमङ्गले ज्वालामालिनि चित्रे महानित्ये (१०२) परमेश्वरपरमेश्वरि मित्रीशमयि षष्ठीशमय्युड्डीशमयि चर्यानाथमयि लोपामुद्रामय्यगस्त्यमयि कालतापनमयि धर्माचारमयि मुक्तकेशीश्वरमयि दीपकलानाथमयि विष्णुदेवमयि प्रभाकरदेवमयि तेजोदेवमयि मनोजदेवमयि कल्याणदेवमयि रत्नदेवमयि वासुदेवमयि (२१७) श्रीरामानन्दमय्यणिमासिद्धे लघिमासिद्धे महिमासिद्धे ईशित्वसिद्धे वशित्वसिद्धे प्राकाम्यसिद्धे भुक्तिसिद्ध इच्छासिद्धे प्राप्तिसिद्धे सर्वकामसिद्धे (२७१) ब्राह्मि माहेश्वरि कौमारि वैष्णवि वाराहि माहेन्द्रि चामुण्डे महालक्ष्मि (२९६) सर्वसंक्षोभिणि सर्वविद्राविणि सर्वाकर्षिणि सर्ववशंकरि सर्वोन्मादिनि सर्वमहाङ्कुशे सर्वखेचरि सर्वबीजे सर्वयोने सर्वत्रिखण्डे त्रैलोक्यमोहनचक्रस्वामिनि प्रकटयोगिनि (३६५) कामाकर्षिणि बुद्ध्याकर्षिण्यहंकाराकर्षिणि शब्दाकर्षिणि स्पर्शाकर्षिणि रूपाकर्षिणि रसाकर्षिणि गन्धाकर्षिणि चित्ताकर्षिणि धैर्याकर्षिणि स्मृत्याकर्षिणि नामाकर्षिणि बीजाकर्षिण्यमृताकर्षिणि शरीराकर्षिणि सर्वाशापरिपूरकचक्रस्वामिनि (४५९) गुप्तयोगिन्यनङ्गकुसुमेऽनङ्गमेखलेऽनङ्गमदनेऽनङ्गमदनातुरेऽनङ्गरेखेऽनङ्गवेगिन्यनङ्गाङ्कुशेऽनङ्गमालिनि सर्वसंक्षोभणचक्रस्वामिनि गुप्ततरयोगिनि (५२२) सर्वसंक्षोभिणि सर्वविद्रा-

रिवादीनं, लक्ष्मीदाव, नेत्रदीव, अहनी दीव, कामेश्वारे,



विणि सर्वाकर्षिणि सर्वाह्लादिनि सर्वसंमोहिनि सर्वस्तम्भिनि सर्वजृम्भिणि सर्ववशंकरि सर्वरञ्जिनि सर्वोन्मादिनि सर्वार्थसाधिनि सर्वसंपत्तिपूरणि सर्वमन्त्रमयि सर्वद्वन्द्वक्षयंकरि सवसौभाग्यदायकचक्रस्वामिनि संप्रदाययोगिनि (६२४) सर्वसिद्धिप्रदे सर्वसंपत्प्रदे सर्वप्रियंकरि सर्वमङ्गलकारिणि सर्वकामप्रदे सर्वदुःखविमोचिनि सर्वमृत्युप्रशमनि सर्वविघ्ननिवारिणि सर्वाङ्गसुन्दरि सर्वसौभाग्यदायिनि सर्वार्थसाधकचक्रस्वामिनि कुळोत्तीर्णयोगिनि (७१२) सर्वज्ञे सर्वशक्ते सर्वैश्वर्यप्रदे सर्वज्ञानमयि सर्वव्याधिविनाशिनि सर्वाधारस्वरूपे सर्वपापहरे सर्वानन्दमयि सर्वरक्षास्वरूपिणि सर्वेप्सितप्रदे सर्वरक्षाकरचक्रस्वामिनि निगर्भयोगिनि (७८९) वशिनि कामेश्वरि मोदिनि विमलेऽरुणे जयिनि सर्वेश्वरि कौळिनि सर्वरोगहरचक्रस्वामिनि रहस्ययोगिनि (८३१) बाणिनि चापिनि पाशिन्यङ्कुशिनि महाकामेश्वरि महावज्रेश्वरि महाभगमालिनि महाश्रीसुन्दरि सर्वसिद्धिप्रदचक्रस्वामिन्यतिरहस्ययोगिनि (८८६) श्रीश्रीमहाभट्टारिके सर्वानन्दमयचक्रस्वामिनि परापररहस्ययोगिनि (९१५) त्रिपुरे त्रिपुरेशि त्रिपुरसुन्दरि त्रिपुरवासिनि त्रिपुराश्रीस्त्रिपुरमालिनि त्रिपुरासिद्धे त्रिपुराम्ब महात्रिपुरसुन्दरि (९६१) महामहेश्वरि महामहाशक्ते महामहागुप्ते महामहाज्ञप्ते महामहानन्दे महामहास्पन्दे महामहाशये महामहाश्रीचक्रनगरसम्राज्ञि नमस्ते त्रिः स्वाहा श्रीं ह्रीं ऐं ॥ (१०३१)

जपान्ते—

श्रीमहाकामेश्वरनामकमहाकामेश्वरीशिवाङ्कनिलयश्रीकामेश्वरीनामकमहाकामेश्वरीललितामहात्रिपुरसुन्दरीपराभट्टारिकाम्बादेवताप्रसादेन मम खड्गसिद्ध्यवाप्त्यर्थे मया कृतश्रीशुद्धशक्तिमालामन्त्रजपसमर्पणे विनियोगः। श्रीविद्यापञ्चदशाक्षरीमूलत्रिखण्डैः पूर्ववत् कराङ्गन्यासं कृत्वा सुवर्भुवर्भूरोमिति दिग्विमोकः।

ध्यानम्—

आरक्ताभाम्............ईश्वरीमीश्वराणाम्।

तादृशं खड्गमाप्नोति............भविष्यति।

पूर्ववत् पञ्चपूजां कृत्वा समर्पयेत्।

'गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु मे देवि त्वत्प्रसादान्मयि स्थिरा॥'

मया कृतशुद्धशक्तिमालामहामन्त्रजपानुष्ठानं श्रीकामेश्वरनामकमहाकामेश्वरशिवाङ्कनिलयश्रीकामेश्वरीनामकमहाकामेश्वरीललितामहात्रिपुरसुन्दरीपराभट्टारिकाम्बादेवतार्पणमस्तु।

अनेन मया कृतश्रीशुद्धशक्तिमालामन्त्रजपेन भगवतीश्रीकामेश्वरनामकमहाकामेश्वरशिवाङ्कनिलयश्रीकामेश्वरीनामकमहाका-

मेश्वरीललितामहात्रिपुरसुन्दरीपराभट्टारिकाम्बादेवताप्रीता सुप्रसन्नावरदा भवतु ।

श्रीकामेश्वरनामकमहाकामेश्वरशिवाङ्कनिलयश्रीकामेश्वरीनामकमहाकामेश्वरीललितामहात्रिपुरसुन्दरीपराभट्टारिकाम्बादेवताप्रसादेन खड्गसिद्ध्यवाप्तिरस्तु । सर्वं श्रीसद्गुरुपरदेवतापरब्रह्मार्पणमस्तु ॥

इति श्रीशुद्धशक्ति(प्रकृति)मालामहामन्त्रपरायण विधिः (१)

—: * :—

(2)

श्रीशिवाय गुरवे नमः

एकारभगमालिनीनित्याकशुक्लद्वितीयाकृष्णचतुर्दशीप्रयुक्ता-

## (२) नमोऽन्तशक्तिमाला (२६६९ - वर्णाः)

रसनन्दाद्रिदसार्णा नमोऽन्ता शक्तिमालिका

(ए)

अस्य श्रीनमोऽन्तशक्तिमालामहामन्त्रस्य, पाय्विन्द्रियाधिष्ठायिमित्रादित्यभैरवर्षये नमः शिरसि । उष्णिकछन्दसे नमः

मुखे । भोगदैकारभट्टरकपीठस्थितैकवीरनामकमहाकामेश्वर-शिवाङ्कनिलयैकलानामकमहाकामेश्वरललितामहात्रिपुरसुन्दरीपरा-भट्टारिकाम्बायै देवतायै नमः हृदये। ऐं क ५ बीजाय नमः गुह्ये ; सौः स ४ शक्त्यै नमः पादयोः ; क्लीं ह ६ कीलकायै नमः नाभौ। मम एकवीरनामकमहाकामेश्वरशिवाङ्कनिलयैकलानामक-महाकामेश्वरीललितामहात्रिपुरसुन्दरीपराभट्टारिकाम्बा देवताप्रसा-देन पादुकासिद्धयवाप्त्यर्थे श्रीनमोऽन्तशक्तिमालामहामन्त्रजपे विनियोगः। श्रीविद्यापञ्चदशाक्षरीमूलत्रिखण्डैः कराङ्गन्यासः। भूर्भुवः सुवरोमिति दिग्बन्धः।

आरक्ताभाम्...............ईश्वराणाम्॥

तादृशं पादुकायुग्ममाप्नोति तव भक्तिमान्।
यदाक्रमणमात्रेण क्षणात् त्रिभुवनक्रमः॥

लं पृथिवीतत्त्वात्मिकायै एकवीरनामकमहाकामेश्वरशिवाङ्कनिलयै-कलानामकमहाकामेश्वरीललितामहात्रिपुरसुन्दरीपराभट्टारि-काम्बादेवतायै गन्धं परिकल्पयामि नमः।

हं आकाशतत्त्वात्मिकायै .... पुष्पं परिकल्पयामि नमः।

यं वायुतत्त्वात्मिकायै .... धूपं परिकल्पयामि नमः।

रं तेजस्तत्त्वात्मिकायै .... दीपं परिकल्पयामि नमः।
वं अमृततत्त्वात्मिकायै .... अमृतं नैवेद्यं परिकल्पयामि नमः।
सं सर्वतत्त्वात्मिकायै .... ताम्बूलादिसर्वोप ....नमः।

गुरुर्ब्रह्मा.................गुरवे नमः।

इति श्रीगुरुं प्रणम्य, नमोऽन्तशक्तिमालामहामन्त्रजपं कुर्यात्।

ऐं ह्रीं श्रीं ओं नमस्त्रिपुरसुन्दर्यै नमः पादुकां पूजयामि (२१) हृदयदेव्यै नमः पादुकां पूजयामि शिरोदेव्यै नमः *पा० शिखादेव्यै नमः पा० कवचदेव्यै नमः पा० नेत्रदेव्यै नमः पादुकां पूजयाम्यस्त्रदेव्यै नमः पा...मि (१००) कामेश्वर्यै नमः पा० भगमालिन्यै नमः पा० नित्यक्लिन्नायै नमः पा० भेरुण्डायै नमः पा० वह्निवासिन्यै नमः पा० महावज्रेश्वर्यै नमः पा० शिवादूत्यै नमः पा० त्वरितायै नमः पा० कुलसुन्दर्यै नमः पा० नित्याय नमः पा० नीलपताकायै नमः पा० विजयायै नमः पा० सर्वमङ्गळायै नमः पा० ज्वालामालिन्यै नमः पा० चित्रायै नमः पा० महानित्यायै नमः पा....मि (३०८) परमेश्वरपरमेश्वर्यै नमः पा० मित्रीशमय्यै नमः पा० षष्ठीशमय्यै नमः पादुकां पूजयाम्युड्डीशमय्यै नमः पा० चर्यानाथमय्यै नमः

---

*पा० = पादुकां पूजयामि

पा० लोपामुद्रामय्यै नमः पादुकां पूजयाम्यगस्त्यमय्यै नमः पा० कालतापनमय्यै नमः पा० धर्माचारमय्यै नमः पा० मुक्तकेशीश्वरमय्यै नमः पा० दीपकलानाथमय्यै नमः पा० विष्णुदेवमय्यै नमः पा० प्रभाकरदेवमय्यै नमः पा० तेजोदेवमय्यै नमः पा० मनोजदेवमय्यै नमः पा० कल्याणदेवमय्यै नमः पा० रत्नदेवमय्यै नमः पा० वासुदेवमय्यै नमः पा० (५९५) श्रीरामानन्दमय्यै नमः पादुकां पूजयाम्यणिमासिद्ध्यै नमः पा० लघिमासिद्ध्यै नमः पा० महिमासिद्ध्यै नमः पादुकां पूजयामीशित्वसिद्ध्यै नमः पा० वशित्वसिद्ध्यै नमः पा० प्राकाम्यसिद्ध्यै नमः पा० भुक्तिसिद्ध्यै नमः पादुकां पूजयामीच्छासिद्ध्यै नमः पा० प्राप्तिसिद्ध्यै नमः पा० सर्वकामसिद्ध्यै नमः पा ... मि (७४६) ब्राह्म्यै नमः पा० माहेश्वर्यै नमः पा० कौमार्यै नमः पा० वैष्णव्यै नमः पा० वाराह्यै नमः पा० माहेन्द्र्यै नमः पा० चामुण्डायै नमः पा० महालक्ष्म्यै नमः पा...मि (८४४) सर्वसंक्षोभिण्यै नमः पा० सर्वविद्राविण्यै नमः पा० सर्वाकर्षिण्यै नमः पा० सर्ववशंकर्यै नमः पा० सर्वोन्मादिन्यै नमः पा० सर्वमहाङ्कुशायै नमः पा० सर्वखेचर्यै नमः पा० सर्वबीजायै नमः पा० सर्वयोन्यै नमः पा० सर्वत्रिखण्डायै नमः पा० त्रैलोक्यमोहनचक्रस्वामिन्यै नमः पा० प्रकटयोगिन्यै नमः पा... मि (१०२४) कामाकर्षिण्यै नमः पा०

बुद्ध्याकर्षिण्यै नमः पादुकां पूजयाम्यहंकाराकर्षिण्यै नमः पा० शब्दाकर्षिण्यै नमः पा० स्पर्शाकर्षिण्यै नमः पा० रूपाकर्षिण्यै नमः पा० रसाकर्षिण्यै नमः पा० गन्धाकर्षिण्यै नमः पा० चित्ताकर्षिण्यै नमः पा० धैर्याकर्षिण्यै नमः पा० स्मृत्याकर्षिण्यै नमः पा० नामाकर्षिण्यै नमः पा० बीजाकर्षिण्यै नमः पादुकां पूजयाम्यात्माकर्षिण्यै नमः पादुकां पूजयाम्यमृताकर्षिण्यै नमः पा० शरीराकर्षिण्यै नमः पा...मि (१२४९) सर्वाशापरिपूरकचक्रस्वामिन्यै नमः पा० गुप्तयोगिन्यै नमः पादुकां पूजयाम्यनङ्गकुसुमायै नमः पादुकां पूजयाम्यनङ्गमेखलायै नमः पादुकां पूजयाम्यनङ्गमदनायै नमः पादुकां पूजयाम्यनङ्गमदनातुरायै नमः पादुकां पूजयाम्यनङ्गरेखायै नमः पादुकां पूजयाम्यनङ्गवेगिन्यै नमः पादुकां पूजयाम्यनङ्गाङ्कुशायै नमः पादुकां पूजयाम्यनङ्गमालिन्यै नमः पा० सर्वसंक्षोभणचक्रस्वामिन्यै नमः पा...मि (१४३९) सर्वसंक्षोभिण्यै नमः पा० सर्वविद्राविण्यै नमः पा० सर्वाकर्षिण्यै नमः पा० सर्वाह्लादिन्यै नमः पा० सर्वसंमोहिन्यै नमः पा० सर्वस्तम्भिन्यै नमः पा० सर्वजृम्भिण्यै नमः पा० सर्ववशंकर्यै नमः पा० सर्वरञ्जिन्यै नमः पा० सर्वोन्मादिन्यै नमः पा० सर्वार्थसाधिन्यै नमः पा० सर्वसंपत्तिपूरण्यै नमः पा० सर्वमन्त्रमय्यै नमः पा० सर्वद्वन्द्वक्षयंकर्यै नमः पा० सर्वसौभाग्यदायकचक्रस्वामिन्यै नमः पा० सम्प्रदाययोगिन्यै नमः पा ...मि

(१६८५) सर्वसिद्धिप्रदायै नमः पा० सर्वसंपत्प्रदायै नमः पा० सर्वप्रियंकर्यै नमः पा० सर्वमङ्गलकारिण्यै नमः पा० सर्वकामप्रदायै नमः पा० सर्वदुःखविमोचिन्यै नमः पा० सर्वमृत्युप्रशमन्यै नमः पा० सर्वविघ्ननिवारिण्यै नमः पा० सर्वाङ्गसुन्दर्यै नमः पा० सर्वसौभाग्यदायिन्यै नमः पा० सर्वार्थसाधकचक्रस्वामिन्यै नमः पा० कुलोत्तीर्णयोगिन्यै नमः पा...मि (१८८४) सर्वज्ञायै नमः पा० सर्वशक्त्यै नमः पा० सर्वैश्वर्यप्रदायै नमः पा० सर्वज्ञानमय्यै नमः पा० सर्वव्याधिविनाशिन्यै नमः पा० सर्वाधारस्वरूपायै नमः पा० सर्वपापहरायै नमः पा० सर्वानन्दमय्यै नमः पा० सर्वरक्षास्वरूपिण्यै नमः पा० सर्वेप्सितप्रदायै नमः पा० सर्वरक्षाकरचक्रस्वामिन्यै नमः पा० निगर्भयोगिन्यै नमः पा...मि (२०७४) वशिन्यै नमः पा० कामेश्वर्यै नमः पा० मोदिन्यै नमः पा० विमलायै नमः पादुकां पूजयाम्यरुणायै नमः पा० जयिन्यै नमः पा० सर्वेश्वर्यै नमः पा० कौळिन्यै नमः पा० सर्वरोगहरचक्रस्वामिन्यै नमः पा० रहस्ययोगिन्यै नमः पा...मि (२२०८) बाणिन्यै नमः पा० चापिन्यै नमः पा० पाशिन्यै नमः पादुकां पूजयाम्यङ्कुशिन्यै नमः पा....मि (२२५६) महाकामेश्वर्यै नमः पा० महावज्रेश्वर्यै नमः पा० महाभगमालिन्यै नमः पा० महाश्रीसुन्दर्यै नमः पा० सर्वसिद्धिप्रदचक्रस्वामिन्यै नमः पादुकां पूजयाम्यतिरहस्ययोगिन्यै

नमः पा....मि (२३५३) श्रीश्रीमहाभाट्टारिकायै नमः पा० सर्वानन्दमयचक्रस्वामिन्यै नमः पा० परापररहस्ययोगिन्यै नमः पा....मि (२४१०) त्रिपुरायै नमः पा० त्रिपुरेश्यै नमः पा० त्रिपुरसुन्दर्यै नमः पा० त्रिपुरवासिन्यै नमः पा० त्रिपुराश्रियै नमः पा० त्रिपुरमालिन्यै नमः पा० त्रिपुरासिद्धायै नमः पा० त्रिपुराम्बायै नमः पा० महात्रिपुरसुन्दर्यै नमः पा...मि (२५४१) महामहेश्वर्यै नमः पा० महामहाराज्यै नमः पा० महामहाशक्त्यै नमः पा० महामहागुप्तायै नमः पा० महामहाज्ञप्त्यै नमः पा० महामहानन्दायै नमः पा० महामहास्पन्दायै नमः पा० महामहाशयायै नमः पा० महामहाश्रीचक्रनगरसम्राज्ञ्यै नमः पादुकां पूजयामि । नमस्ते त्रिः स्वाहा । श्रीं ह्रीं ऐं ॥ (२६९६)

जपान्ते—

श्रीएकवीरनामकमहाकामेश्वरशिवाङ्कनिलयैकलानामकमहाकामेश्वरीललितामहात्रिपुरसुन्दरीपराभट्टारिकाम्बादेवताप्रसादेन मम पादुकासिद्ध्यवाप्त्यर्थे मया कृतश्रीनमोऽन्तशक्तिमालामहामन्त्रजपसंमर्पणे विनियोगः । श्रीविद्यापञ्चदशाक्षरीमूलत्रिखण्डैः कराङ्गन्यासं कृत्वा, सुवर्भुवर्भूवरोमिति दिग्विमोकः ।

ध्यानम्—

आरक्ताभाम्..........ईश्वराणाम् ।

पूर्ववत् पञ्चपूजां कृत्वा, समर्पयेत्।

'गुह्यातिगुह्य ......मयि स्थिरा।'

मया कृतश्रीनमोऽन्तशक्तिमालामहामन्त्रजपानुष्ठानं श्रीएकवीरनामकमहाकामेश्वराङ्कनिलयैकलानानकमहाकामेश्वरीललिता-महात्रिपुरसुन्दरीपराभट्टारिकाम्बादेवतार्पणमस्तु।

अनेन मया कृतश्रीनमोऽन्तशक्तिमालामहामन्त्रजपेन भगवती श्रीमदेकवीरनामक........देवता सुप्रीता सुप्रसन्ना वरदा भवतु।

श्रीमदेकवीरनामक....देवताप्रसादेन मम पादुकासिद्ध्य-वाप्तिरस्तु। सर्वं श्रीसद्गुरु....ब्रह्मार्पणमस्तु।

इति श्रीनमोऽन्तशक्तिमालामहामन्त्रपारायणविधिः (२)

—:*:—

(3)

श्रीशिवाय गुरुवे नमः ॥

ईकारनित्यक्लिन्नाकशुक्लतृतीयाकृष्णत्रयोदशीप्रयुक्ता-

## (३) स्वाहान्तशक्तिमाला (१४२९) वर्णाः।

निधिदस्राब्धिचन्द्रार्णस्वाहान्ता शक्तिमालिका

(ई)

अस्य श्रीस्वाहान्तशक्तिमालामहामन्त्रस्य, पादेन्द्रियाधिष्ठायि-धात्रादित्यभैरवर्षये नमः शिरसि; अनुष्टुप्छन्दसे नमः

मुखे ; मोक्षदैका भट्टारकपीठस्थितेश्वरनामकमहाकामेश्वरशिवाङ्क-निलयैश्वरीनामकमहाकामेश्वरीललितामहात्रिपुरसुन्दरीपराभट्टारि–काम्बायै देवतायै नमः हृदये । ऐं क ५ वीजायै नमः गुह्ये ; सौः स ४ शक्त्यै नमः पादयोः ; क्लीं ह ६ कीलकाय नमः नाभौ । श्रीविद्यापञ्चदशाक्षरीमूलत्रिखण्डैः कराङ्गन्यासः । भूर्भुवः-सुवरोमिति दिग्बन्धः ।

मम ईश्वरनामकमहाकामेश्वराङ्कनिलयेश्वरीनामकमहाकामे-श्वरीललितामहात्रिपुरसुन्दरीपराभट्टारिकाम्बादेवताप्रसादेन अञ्ज-नसिद्ध्यवाप्त्यर्थे स्वाहान्तशक्तिमालामहामन्त्रजपे विनियोगः ।

ध्यानम्—

आरक्ताभाम् ............ ईश्वराणाम् ।

सिद्धाञ्जनं समासाद्य तेनाञ्चितविलोचनः ।
नधिं पश्यति सर्वत्र भक्तस्तेन समृद्धिमान् ॥

लं पृथिवीतत्त्वात्मिकायै ईश्वरनामकमहाकामेश्वरशिवाङ्कनिलये-श्वरीनामकमहाकामेश्वरीललितामहात्रिपुरसुन्दरीपराभट्टारि-कादेवतायै गन्धं परिकल्पयामि नमः ।

हं आकाशतत्त्वात्मिकायै···· इत्यादि पञ्चपूजां कृत्वा, 'गुरुर्ब्रह्मा' इत्यादिना श्रीगुरुं प्रणम्य, स्वाहान्तशक्तिमालामहामन्त्रजपं कुर्यात् ।

ऐं ह्रीं श्रीं ओं नमस्त्रिपुरसुन्दर्यै स्वाहा (१४) हृदयदेव्यै स्वाहा शिरोदेव्यै स्वाहा शिखादेव्यै स्वाहा कवचदेव्यै स्वाहा नेत्रदेव्यै स्वाहास्त्रदेव्यै स्वाहा (५१) कामेश्वर्यै स्वाहा भगमालिन्यै स्वाहा नित्यक्लिन्नायै स्वाहा भेरुण्डायै स्वाहा वह्निवासिन्यै स्वाहा महावज्रेश्वर्यै स्वाहा शिवादूत्यै स्वाहा त्वरितायै स्वाहा कुलसुन्दर्यै स्वाहा नित्यायै स्वाहा नीलपताकायै स्वाहा विजयायै स्वाहा सर्वमङ्गळायै स्वाहा ज्वालामालिन्यै स्वाहा चित्रायै स्वाहा महानित्यायै स्वाहा (१५७) परमेश्वरपरमेश्वर्यै स्वाहा मित्रीशमय्यै स्वाहा षष्ठीशमय्यै स्वाहोड्डीशमय्यै स्वाहा चर्यानाथमय्यै स्वाहा लोपामुद्रामय्यै स्वाहागस्त्यमय्यै स्वाहा कालतापनमय्यै स्वाहा धर्माचारमय्यै स्वाहा मुक्तकेशीश्वरमय्यै स्वाहा दीपकलानाथमय्यै स्वाहा विष्णुदेवमय्यै स्वाहा प्रभाकरदेवमय्यै स्वाहा तेजोदेवमय्यै स्वाहा मनोजदेवमय्यै स्वाहा कल्याणदेवमय्यै स्वाहा रत्नदेवमय्यै स्वाहा वासुदेवमय्यै स्वाहा (३०८) श्रीरामानन्दमय्यै स्वाहाणिमासिद्ध्यै स्वाहा लघिमासिद्ध्यै स्वाहा महिमासिद्ध्यै स्वाहेशित्वसिद्ध्यै स्वाहा वशित्वसिद्ध्यै स्वाहा

प्राकाम्यसिद्ध्यै स्वाहा भुक्तिसिद्ध्यै स्वाहेच्छासिद्ध्यै स्वाहा प्राप्तिसिद्ध्यै स्वाहा सर्वकामसिद्ध्यै स्वाहा (३८२) ब्राह्म्यै स्वाहा माहेश्वर्यै स्वाहा कौमार्यै स्वाहा वैष्णव्यै स्वाहा वाराह्यै स्वाहा माहेन्द्र्यै स्वाहा चामुण्डायै स्वाहा महालक्ष्म्यै स्वाहा (४२४) सर्वसंक्षोभिण्यै स्वाहा सर्वविद्राविण्यै स्वाहा सर्वाकर्षिण्यै स्वाहा सर्ववशंकर्यै स्वाहा सर्वोन्मादिन्यै स्वाहा सर्वमहाङ्कुशायै स्वाहा सर्वखेचर्यै स्वाहा सर्वबीजायै स्वाहा सर्वयोन्यै स्वाहा सर्वत्रिखण्डायै स्वाहा त्रैलोक्यमोहनचक्रस्वामिन्यै स्वाहा प्रकट-योगिन्यै स्वाहा (५२०) कामाकर्षण्यै स्वाहा बुद्ध्याकर्षण्यै स्वाहाहंकाराकर्षण्यै स्वाहा शब्दाकर्षण्यै स्वाहा स्पर्शाकर्षण्यै स्वाहा रूपाकर्षण्यै स्वाहा रसाकर्षण्यै स्वाहा गन्धाकर्षण्यै स्वाहा चित्ताकर्षण्यै स्वाहा धैर्याकर्षण्यै स्वाहा स्मृत्याकर्षण्यै स्वाहा नामाकर्षण्यै स्वाहा बीजाकर्षण्य स्वाहात्माकर्षण्यै स्वाहा शरीराकर्षण्यै स्वाहा सर्वाशापरिपूरकचक्रस्वामिन्यै स्वाहा (६४८) गुप्तयोगिन्यै स्वाहानङ्गकुसुमायै स्वाहानङ्ग-मेखलायै स्वाहानङ्गमेखलायै स्वाहानङ्गमदनायै स्वाहानङ्गमद-नातुरायै स्वाहानङ्गरेखायै स्वाहानङ्गवेगिन्यै स्वाहानङ्गाङ्कुशायै स्वाहानङ्गमालिन्यै स्वाहा सर्वसंक्षोभणचक्रस्वामिन्यै स्वाहा गुप्ततरयोगिन्यै स्वाहा (७३९) सर्वसंक्षोभिण्यै स्वाहा सर्वविद्राविण्यै स्वाहा सर्वाकर्षिण्यै स्वाहा सर्वाह्लादिन्यै स्वाहा

सर्वसंमोहिन्यै स्वाहा सर्वस्तम्भिन्यै स्वाहा सर्वजृम्भिण्यै स्वाहा सर्ववशंकर्यै स्वाहा सर्वरञ्जिन्यै स्वाहा सर्वोन्मादिन्यै स्वाहा सर्वार्थसाधिन्यै स्वाहा सर्वसंपत्तिपूरण्यै स्वाहा सर्वमन्त्रमय्यै स्वाहा सर्वद्वंद्वक्षयंकर्यै स्वाहा सर्वसौभाग्यदायकचक्रस्वामिन्यै स्वाहा संप्रदाययोगिन्यै स्वाहा (८७३) सर्वसिद्धिप्रदायै स्वाहा सर्वसंपत्प्रदायै स्वाहा सर्वप्रियंकर्यै स्वाहा सर्वमङ्गलकारिण्यै स्वाहा सर्वकामप्रदायै स्वाहा सर्वदुःखविमोचिन्यै स्वाहा सर्व-मृत्युप्रशमन्यै स्वाहा सर्वविघ्ननिवारिण्यै स्वाहा सर्वाङ्गसुन्दर्यै स्वाहा सर्वसौभाग्यदायिन्यै स्वाहा सर्वार्थसाधकचक्रस्वामिन्यै स्वाहा कुलोत्तीर्णयोगिन्यै स्वाहा (९८८) सर्वज्ञायै स्वाहा सर्व-व्याधिविनाशिन्यै स्वाहा सर्वाधारस्वरूपायै स्वाहा सर्वपापहरायै स्वाहा सर्वानन्दमय्यै स्वाहा सर्वरक्षास्वरूपिण्यै स्वाहा सर्वेप्सित-प्रदायै स्वाहा सर्वरक्षाकरचक्रस्वामिन्यै स्वाहा निगर्भयोगिन्यै स्वाहा (१०९४) वशिन्यै स्वाहा कामेश्वर्यै स्वाहा मोदिन्यै स्वाहा विमलायै स्वाहारुणायै स्वाहा जयिन्यै स्वाहा सर्वेश्वर्यै स्वाहा कौळिन्यै स्वाहा सर्वरोगहरचक्रस्वामिन्यै स्वाहा रहस्य-योगिन्यै स्वाहा (११५८) बाणिन्यै स्वाहा चापिन्यै स्वाहा पाशिन्यै स्वाहाङ्कुशिन्यै स्वाहा (११७८) महाकामेश्वर्यै स्वाहा महावज्रेश्वर्यै स्वाहा महाभगमालिन्यै स्वाहा महाश्रीसुन्दर्यै

स्वाहा सर्वसिद्धिप्रदचक्रस्वामिन्यै स्वाहातिरहस्ययोगिन्यै स्वाहा (१२३३) श्रीश्रीमहाभट्टारिकायै स्वाहा सर्वानन्दमयचक्र-स्वामिन्यै स्वाहा परापररहस्ययोगिन्यै स्वाहा (१२६९) त्रिपुरायै स्वाहा त्रिपुरेश्यै स्वाहा त्रिपुरसुन्दर्यै स्वाहा त्रिपुरवासिन्यै स्वाहा त्रिपुराश्रियै स्वाहा त्रिपुरमालिन्यै स्वाहा त्रिपुरासिद्धायै स्वाहा त्रिपुराम्बायै स्वाहा महात्रिपुरसुन्दर्यै स्वाहा (१३३७) महा-महेश्वर्यै स्वाहा महामहाराज्ञ्यै स्वाहा महामहाशक्त्यै स्वाहा महामहागुप्तायै स्वाहा महामहाज्ञप्त्यै स्वाहा महामहानन्दायै स्वाहा महामहास्पन्दायै स्वाहा महामहाशयायै स्वाहा महा-महाश्रीचक्रनगरसम्राज्ञ्यै स्वाहा । नमस्ते त्रिः स्वाहा । श्रीं ह्रीं ऐं ॥ (१४२९)

जपान्ते—

श्रीईश्वरनामकमहाकामेश्वरशिवाङ्कनिलयेश्वरीनामकमहा-कामेश्वरीललितामहात्रिपुरसुन्दरीपराभट्टारिकाम्बादेवताप्रसादेन - ममाञ्जनसिद्धयवाप्त्यर्थे मया कृतश्रीस्वाहान्तशक्तिमालामन्त्रजप-समर्पणे विनियोगः । श्रीविद्यापञ्चदशाक्षरीमूलत्रिखण्डैः कराङ्ग-न्यासः । सुवर्भुवर्भूरोमिति दिग्विमोकः । ध्यानं, पञ्चपूजा च पूर्ववत् ।

'गुह्यातिगुह्यगोप्त्री·········मयि स्थिरा'

मया कृतश्रीस्वाहान्तशक्तिमालामहामन्त्रजपानुष्ठानम् ईश्वर-नामकमहाकामेश्वरशिवाङ्कनिलयेश्वरीनामकमहाकामेश्वरीललिता-महात्रिपुरसुन्दरीपराभट्टारिकाम्बादेवतार्पणमस्तु ।

अनेन मया कृतश्रीस्वाहान्तशक्तिमालामहामन्त्रजपेन भगवती ईश्वरनामकमहाकामेश्वर·········पराभट्टारिकाम्बा सुप्रीता सुप्रसन्ना वरदा भवतु ।

श्रीईश्वरनामकमहाकामेश्वरनामक··········पराभट्टारिकाम्बा-देवताप्रसादेन ममाञ्जनसिद्ध्यवाप्तिरस्तु । श्रीसद्गुरु·········ब्रह्मार्पणमस्तु ।

इति श्रीस्वाहान्तशक्तिमालामहामन्त्रपारायणविधिः (३)

—: × :—

(४)

श्रीशिवाय गुरवे नमः

लकारभेरुण्डानित्याकशुक्लचतुर्थीकृष्णद्वादशीप्रयुक्ता-

## (४) तर्पणान्तशक्तिमाला (१७५४-वर्णाः)

अब्धीप्वश्वेन्दुवर्णा स्याच्छक्तेस्तर्पणमालिका

(ल)

अस्य श्रीतर्पणान्तशक्तिमालामहामन्त्रस्य, पाणीन्द्रियाधिष्ठात्र्यर्यमादित्यभैरवर्षये नमः शिरसि ; बृहतीच्छन्दसे नमः मुखे ;

सास्विकलकारभट्टारकपीठस्थितलक्षसारनामकमहाकामेश्वराङ्क-निलयललितानामक-श्रीमहाकामेश्वरीललितामहात्रिपुरसुन्दरीपरा-भट्टारिकाम्बायै देवतायै नमः हृदये । बीजशक्तिकीलानि पूर्ववत् ।

मम श्रीलक्षसारनामकमहाकामेश्वरशिवाङ्कनिलयललिता-नामकमहाकामेश्वरीललितामहात्रिपुरसुन्दरी पराभट्टारिकाम्बा-देवताप्रसादेन मम बिलसिद्ध्यवाप्त्यर्थं तर्पणान्तशक्तिमाला-महामन्त्रजपे विनियोगः । श्रीविद्यापञ्चदशाक्षरीमूलत्रिखण्डैः कराङ्गन्यासः । भूर्भुवः सुवरोमिति दिग्बन्धः ।

ध्यानम्—

'आरक्ताभाम्·········ईश्वराणाम् ।
बिलद्वारमपावृत्य पातालतलयोगिनः ।
वीक्ष्य तेभ्यो लब्धसिद्धिस्तव भक्तः सुखी भवेत् ॥

लं पृथिवीतत्त्वात्मिकायै श्रीलक्षसारनामकमहाकामेश्वरशिवाङ्क-निलयललितानामकमहाकामेश्वरीललितामहात्रिपुरसुन्दरीप-राभट्टारिकाम्बादेवतायै गन्धं परिकल्पयामि नमः इत्यादि पूर्ववत् पञ्चपूजां कृत्वा, 'गुरुर्ब्रह्मा' इत्यादिना श्रीगुरुं प्रणम्य ; तर्पणान्तशक्तिमालामहामन्त्रजपं कुर्यात्

ऐं ह्रीं श्रीं ओं नमस्त्रिपुरसुन्दरीं तर्पयामि (१६) हृदयदेवीं तर्पयामि शिरोदेवीं तर्पयामि शिखादेवीं तर्पयामि कवचदेवीं तर्पयामि नेत्रदेवीं तर्पयाम्यस्त्रदेवीं तर्पयामि (६५) कामेश्वरीं तर्पयामि भगमालिनीं तर्पयामि नित्यक्लिन्नां तर्पयामि भेरुण्डां तर्पयामि वह्निवासिनीं तर्पयामि महावज्रेश्वरीं तर्पयामि शिवादूतीं तर्पयामि त्वरितां तर्पयामि कुलसुन्दरीं तर्पयामि नित्यां तर्पयामि नीलपताकां तर्पयामि विजयां तर्पयामि सर्वमङ्गलां तर्पयामि ज्वलामालिनीं तर्पयामि चित्रां तर्पयामि महानित्यां तर्पयामि (१९४) परमेश्वरपरमेश्वरीं तर्पयामि मित्रीशमयीं तर्पयामि षष्ठीशमयीं तर्पयाम्युड्डीशमयीं तर्पयामि चर्यानाथमयीं तर्पयामि लोपामुद्रामयीं तर्पयाम्यगस्त्यमयीं तर्पयामि कालतापनमयीं तर्पयामि धर्माचारमयीं तर्पयामि मुक्तकेशीश्वरमयीं तर्पयामि दीपकलानाथमयीं तर्पयामि विष्णुदेवमयीं तर्पयामि तेजोदेवमयीं तर्पयामि मनोजदेवमयीं तर्पयामि कल्याणदेवमयीं तर्पयामि रत्नदेवमयीं तर्पयामि वासुदेवमयीं तर्पयामि (३८१) श्रीरामानन्दमयीं तर्पयामि लघिमासिद्धिं तर्पयामि महिमासिद्धिं तर्पयामि वशित्वसिद्धिं तर्पयामि प्राकाम्यसिद्धिं तर्पयामि भुक्तिसिद्धिं तर्पयामीच्छासिद्धिं तर्पयामि प्राप्तिसिद्धिं तर्पयामि सर्वकामसिद्धिं तर्पयामि (४७७) ब्राह्मीं तर्पयामि माहेश्वरीं तर्पयामि कौमारीं तर्पयामि वैष्णवीं तर्पयामि वाराहीं तर्पयामि माहेन्द्रीं तर्पयामि

चामुण्डां तर्पयामि महालक्ष्मीं तर्पयामि (५३४) सर्वसंक्षोभिणीं तर्पयामि सर्वविद्राविणीं तर्पयामि सर्वाकर्षिणीं तर्पयामि सर्ववशंकरीं तर्पयामि सर्वोन्मादिनीं तर्पयामि सर्वमहाङ्कुशां तर्पयामि सर्वखेचरीं तर्पयामि सर्वबीजां तर्पयामि सर्वयोनिं तर्पयामि सर्वत्रिखण्डां तर्पयामि त्रैलोक्यमोहनचक्रस्वामिनीं तर्पयामि प्रकटयोगिनीं तर्पयामि (६५१) कामाकर्षणीं तर्पयामि बुद्ध्याकर्षणीं तर्पयाम्यहंकाराकर्षणीं तर्पयामि शब्दाकर्षणीं तर्पयामि स्पर्शाकर्षणीं तर्पयामि रूपाकर्षणीं तर्पयामि रसाकर्षणीं तर्पयामि गन्धाकर्षणीं तर्पयामि चित्ताकर्षणीं तर्पयामि धैर्याकर्षणीं तर्पयामि स्मृत्याकर्षणीं तर्पयामि नामाकर्षणीं तर्पयामि बीजाकर्षणीं तर्पयाम्यमृताकर्षणीं तर्पयामि शरीराकर्षणीं तर्पयामि सर्वाशापरिपूरकचक्रस्वामिनीं तर्पयामि (८१३) गुप्तयोगिनीं तर्पयाम्यनङ्गकुसुमां तर्पयाम्यनङ्गमेखलां तर्पयाम्यनङ्गमदनां तर्पयाम्यनङ्गरेखां तर्पयाम्यनङ्गवेगिनीं तर्पयाम्यनङ्गाङ्कुशां तर्पयाम्यनङ्गमालिनीं तर्पयामि सर्वसंक्षोभणचक्रस्वामिनीं तर्पयामि गुप्ततरयोगिनीं तर्पयामि (९२०) सर्वसंक्षोभिणीं तर्पयामि सर्वविद्राविणीं तर्पयामि सर्वाकर्षिणीं तर्पयामि सर्वाह्लादिनीं तर्पयामि सर्वसंमोहिनीं तर्पयामि सर्वस्तम्भिनीं तर्पयामि सर्वजृम्भिणीं तर्पयामि सर्ववशंकरीं तर्पयामि सर्वरञ्जिनीं तर्पयामि सर्वोन्मादिनीं तर्पयामि सर्वार्थसाधिनीं तर्पयामि सर्वसंपत्तिपूरणीं तर्पयामि सर्व-

मन्त्रमयीं तर्पयामि सर्वद्वंद्वक्षयंकरीं तर्पयामि सर्वसौभाग्यदायक-चक्रस्वामिनीं तर्पयामि संप्रदाययोगिनीं तर्पयामि (१०८६) सर्व-सिद्धिप्रदां तर्पयामि सर्वसंपत्प्रदां तर्पयामि सर्वप्रियंकरीं तर्पयामि सर्वमङ्गलकारिणीं तर्पयामि सर्वकामप्रदां तर्पयामि सर्वदुःखवि-मोचिनीं तर्पयामि सर्वमृत्युप्रशमनीं तर्पयामि सर्वविघ्ननिवारिणीं तर्पयामि सर्वाङ्गसुन्दरीं तर्पयामि सर्वसौभाग्यदायिनीं तर्पयामि सर्वार्थसाधकचक्रस्वामिनीं तर्पयामि कुलोत्तीर्णयोगिनीं तर्पयामि (१२२२) सर्वज्ञां तर्पयामि सर्वशक्तिं तर्पयामि सर्वैश्वर्यप्रदां तर्पयामि सर्वज्ञानमयीं तर्पयामि सर्वव्याधिविनाशिनीं तर्पयामि सर्वाधारस्वरूपां तर्पयामि सर्वपापहरां तर्पयामि सर्वानन्दमयीं तर्पयामि सर्वरक्षास्वरूपिणीं तर्पयामि सर्वरक्षाकरचक्रस्वामिनीं तर्पयामि निगर्भयोगिनीं तर्पयामि (१३४७) वशिनीं तर्पयामि कामेश्वरीं तर्पयामि मोदिनीं तर्पयामि विमलां तर्पयाम्यरुणां तर्पयामि जयिनीं तर्पयामि सर्वेश्वरीं तर्पयामि कौळिनीं तर्पयामि सर्वरोगहरचक्रस्वामिनीं तर्पयामि रहस्ययोगिनीं तर्पयामि (१४२९) बाणिनीं तपयामि चापिनीं तर्पयामि पाशिनीं तर्प-याम्यङ्कुशिनीं तर्पयामि (१४५७) महाकामेश्वरीं तर्पयामि महावज्रेश्वरीं तर्पयामि महाभगमालिनीं तर्पयामि महाश्रीसुन्दरीं तर्पयामि सर्वसिद्धिप्रदचक्रस्वामिनीं तर्पयाम्यतिरहस्ययोगिनीं तर्पयामि (१५२४) श्रीश्रीमहाभट्टारिकां तर्पयामि सर्वानन्दमय-

चक्रस्वामिनीं तर्पयामि परापररहस्ययोगिनीं तर्पयामि (१५६५) त्रिपुरां तर्पयामि त्रिपुरेशीं तर्पयामि त्रिपुरसुन्दरीं तर्पयामि त्रिपुरमालिनीं तर्पयामि त्रिपुराश्रियं तर्पयामि त्रिपुरमालिनीं तर्पयामि त्रिपुरासिद्धां तर्पयामि त्रिपुराम्बां तर्पयामि महात्रिपुरसुन्दरीं तर्पयामि (१६४८) महामहेश्वरीं तर्पयामि महामहाराज्ञीं तर्पयामि महामहाशक्तिं तर्पयामि महामहागुप्तां तर्पयामि महामहाज्ञप्तिं तर्पयामि महामहानन्दां तर्पयामि महामहास्पन्दां तर्पयामि महामहाशयां तर्पयामि महामहाश्रीचक्रनगरसम्राज्ञीं तर्पयामि । (१७४५) नमस्ते त्रिः स्वाहा । श्रीं ह्रीं ऐं (१७५४)

जपान्ते—

श्रीलक्षसारनामकमहाकामेश्वरशिवाङ्कनिलयललितानामकमहाकामेश्वरीललितामहात्रिपुरसुन्दरीपराभट्टारिकाम्बादेवताप्रसादेन ममांञ्जनसिद्धयवाप्त्यर्थे मया कृतश्रीतर्पणान्तशक्तिमालामहामन्त्रजपसमर्पणे विनियोगः । श्रीविद्यापञ्चदशाक्षरीमूलत्रिखण्डैः कराङ्गन्यासः । सुवर्भुवर्भूरोमिति दिग्विमोकः । ध्यानं, पञ्चोपचारपूजा च पूर्ववत् ।

'गुह्यातिगुह्यगोप्त्री त्वं··················मयि स्थिरा ।'

मया कृतश्रीतर्पणान्तशक्तिमालामन्त्रजपानुष्ठानं लक्षसार-नामकमहाकामेश्वरशिवाङ्कनिलयललितानामकमहाकामेश्वरी-ललितामहात्रिपुरसुन्दरी पराभट्टारिकाम्बादेवतार्पणमस्तु ।

अनेन मया कृतश्रीतर्पणान्तशक्तिमालामहामन्त्रजपेन भगवती श्रीलक्षसारनामकमहाकामेश्वर.... ........पराभट्टारिकाम्बादेवता सुप्रीता सुप्रसन्ना वरदा भवतु ।

श्रीलक्षसारनामक....... .... ....पराभट्टारिकाम्बादेवताप्रसादेन ममाज्ञानसिद्धिरवाप्तिरस्तु । श्रीसद्गुरु....ब्रह्मार्पणमस्तु ॥

इति श्रीतर्पणान्तशक्तिमालामहामन्त्रपारायणविधिः (४)

—:*:—



(५)

श्रीशिवाय गुरवे नमः

ह्रींकारवह्निवासिनीनित्याकशुक्लपञ्चमीकृष्णैकादशीप्रयुक्ता-

## (५) जयान्तशक्तिमाला (१७५३-वर्णाः)

शुचिभूतर्षिचन्द्रार्णा जयान्ता शक्तिमालिका

( ह्रीं )

अस्य श्रीजयान्तशक्तिमालामहामन्त्रस्य, वागिन्द्रियाधिष्ठातृ-शुभ्रदादित्यभैरवर्षये नमः शिरसि ; पङ्क्तिश्छन्दसे नमः मुखे ;

सात्विकह्रींकारभट्टारकपीठस्थितहृच्छयनामक महाकामेश्वरशिवाङ्कनिलयहृल्लेखानामक महाकामेश्वरीललितामहात्रिपुरसुन्दरीपराभट्टारिकाम्बायै देवतायै नमः हृदये । बीजशक्तिकीलानि पूर्ववत् ।

मम श्रीहृच्छयनामकमहाकामेश्वराङ्कनिलयहृल्लेखानामकमहाकामेश्वरीललितामहात्रिपुरसुन्दरीपराभट्टारिकाम्बादेवताप्रसादेन वाक्सिद्ध्यवाप्त्यर्थे जयान्तशक्तिमालामहामन्त्रजपे विनियोगः । श्रीविद्यापञ्चदशाक्षरीमूलत्रिखण्डैः कराङ्गन्यासः । भूर्भुवःसुवरोमिति दिग्बन्धः ।

ध्यानम्—

आरक्ताभाम्……………ईश्वराणाम् ।

वाक्सिद्धिर्द्विविधा प्रोक्ता शापानुग्रहकारिणी ।

महाकवित्वरूपा च भक्तस्ते स्याद् द्वयास्पदम् ॥

लं पृथिवीतत्त्वात्मिकायै श्रीहृच्छयनामकमहाकामेश्वरशिवाङ्कनिलयहृल्लेखानामकमहाकामेश्वरीललितामहात्रिपुरसुन्दरी-पराभट्टारिकाम्बादेवतायै गन्धं परिकल्पयामि नमः इत्यादि पञ्चोपचारपूजां कृत्वा, 'गुरुर्ब्रह्मा' इत्यादिना श्रीगुरुं प्रणम्य श्रीजयान्तशक्तिमालामहामन्त्रजपं कुर्यात् ॥

